श्रीजिनदत्तसूरिप्राचीनपुस्तकोद्धारफण्ड(सुरत) ग्रन्थाङ्क-६१

अर्हम् ।

श्रीखरतरगच्छेश्वर नवाङ्गवृत्तिकार श्रीजिनअभयदेवसूरिपट्टालङ्कार कविचक्रवर्त्ति
श्रीमज्जिनवल्लभसूरिविरचित —

# श्रीसङ्घपट्टकः ।

श्रीसाधुकीर्त्तिगणि निर्मितावचूर्याविभूषित', लक्ष्मीसेनरचितटीकया
ममलङ्कृतः हर्षराज उपाध्यायविहित लघुवृत्त्या सनाथीकृतश्च ।



श्रीमज्जिनकृपाचन्द्रसूरीश्वरशिष्य उपाध्यायपदालङ्कृत मुनिश्रीसुखसागरोप
देशात् श्रेष्ठिवर्य्य बाबू प्रमलचन्द्र बोथरा, बाबू गोविन्दचन्द्र भूरा तथा
महासमुद श्रीसङ्घ इत्यादि श्राद्धवर्यैर्विहितेन द्रव्यसाहाय्येन,



प्रकाशक

श्रीजिनदत्तसूरिज्ञानभण्डार,

मु. सुरत.

वि० सं० २००९ ] भेट. [ प्रति ५००

पुस्तक प्राप्तिस्थान—
श्री जिनदत्तसूरि ज्ञानभण्डार,
ठि. गोपीपुरा, ओसवाल मोहल्ला,
मु० सुरत (गुजरात)।

श्री सङ्घपट्टक के द्रव्य साहाय्यक महाशयों की शुभ नामावली:–

| | | |
|---|---|---|
| ४५०) | बाबू मगनचन्दजी बोथरा .... .... .... | कलकत्ता। |
| २५०) | बाबू गोविन्दचन्दजी मुग .... .... .... | कलकत्ता। |
| २५०) | महासमुंद श्रीसङ्घ के ज्ञानखाते से– हस्ते–हणुतमलजी पींचा .... .... .... | महासमुंद। |
| १०१) | स्व० गुलाबचंदजी सेठिया स्मरणार्थ– तत्पुत्र तेजमलजी सेठिया.... .... .... | बालाघाट। |
| १०१) | श्रीयुत सुखलालजी जमकरणजी चोपड़ा.... .... | राजनांदगांव। |
| १५१) | खुशालचंद लुणावत धर्मपत्नी सौभाग्यवती मंगुबाई | नरसिंहपुर। |
| २१) | एक बाई की तरफ से | नरसिंहपुर। |
| २०१) | श्री छोटमलजि मनमालीजि की सौ० चंपाबाइ. | मु० नागपुर |
| १००) | सेठ सोभागमलजि तथा महेन्द्रकुमारजि डागा | मु० हिंगणघाट |

मुद्रक:—
शाह गुलाबचंद लल्लुभाई,
श्री महोदय प्री. प्रेस—भावनगर।

# —: नि वे द . . न :—

संघपट्टक, जो आप के करकमलों में विराजित है, के-रचयिता आचार्य श्री जिनवल्लभसूरिजी महाराज हैं। उनका अस्तित्व समय वि सं ११२५–६७ है, जैसा कि-श्री जिनचंद्रसूरि रचित संवेगरंगशाला से सिद्ध है। सूरिजीने उपर्युक्त ग्रन्थ का संशोधन वि सं ११२५ में किया था। इस संघपट्टक की रचना आकस्मिक घटना नहीं पर एक सत्याश्रित सिद्धान्त पर आधृत है।

श्री जिनवल्लभसूरिजी के जीवन से ज्ञात होता है कि, उनका चित्रकूट-चित्तौड में अच्छा प्रभाव था। आपने वहाँ पर, अनेक प्रकार के कष्ट व यातनाएँ सह कर, जैन शासन की जो सेवा की है, वह उल्लेखनीय है। जैन संस्कृति के इतिहास में इन सेवाओं का बहुत बडा महत्त्व है। यही कारण है कि, चित्तौड का श्री संघ सूरिजी का परम भक्त और आज्ञानुवर्ती था। आप के सदुपदेश से, वहाँ के श्रावकोंने शासननायक महावीरस्वामी का नवीन विधिचैत्य निर्माण करवाया था। सूरिजी द्वारा ही इस की प्रतिष्ठा का महत्त्वपूर्ण कार्य सम्पन्न हुआ था और संघ व्यवस्था सूचक प्रस्तुत "संघपट्टक" मूल, (४० श्लोक) उपर्युक्त विधिचैत्य के मुख्य द्वार पर पाषाण-शिला पर खुदवा कर, लगाया गया था, जैसा कि अचलगच्छीय श्री महेन्द्रसूरि प्रणीत 'शतपदी' से सिद्ध होता है।

जैन साहित्य में, इस ग्रन्थ का स्थान कितना आदरणीय समझा जाता है, इस का अध्ययन कितने व्यापक रूप से होता आया है, इस का ज्ञान हमें, उन वृत्तियों से होता है, जो समय समय पर, विभिन्न आचार्य, मुनि और जैन गृहस्थों द्वारा इस पर रची गयीं, टीकाओं से विदित होता है कि मध्यकालीन जैन संस्कृति और साहित्य में यही एक ऐसी मूल्यवान् कृति है, जिस पर प्रकाण्ड पंडितों को भाष्य लिखना पडा। यह आकर्षण व्यक्ति मूलक नहीं पर गुणमूलक है।

अद्यावधि रचित वृत्तियों की संख्या आठ तो ज्ञात हो चुकी है। इन का उल्लेख भी

१ जेसलमेर जैन भण्डार सूची पृ ११।

हरि दामोदर वेलणकर गुम्फित "जिनरत्नकोश" में हुआ है। वृत्तियों में सर्वश्रेष्ठ व प्राचीन "बृहद्वृत्ति" है, जिसका प्रणयन प्रकाण्ड पंडित और शास्त्रार्थी श्रीजिनपतिसूरिजी म. द्वारा हुआ। यह वृत्ति क्या है? एक प्रकार से महाभाष्य है। इस में आचार्य महाराजने अपने सैद्धान्तिक ज्ञानबल से तर्कयुक्त शैली में, सुन्दर रूप से मूल ग्रन्थगत विषय का समर्थन किया है।

प्रस्तुत संस्करण तैयार करने में निम्न हस्तलिखित प्रतियों का उपयोग किया है, जिन का परिचय इस प्रकार है—

**प्रति परिचय—**

(१) A **संघपट्टक-अवचूरि, साधुकीर्ति गणि रचित, रचनाकाल सं. १६१९।**

यह "प्रति" मुनि कान्तिसागरजी के निजी संग्रह की है। पत्र ६, त्रिपाठ, जिस का चित्र इस ग्रन्थ में दिया जा रहा है। इस की लेखन प्रशस्ति इस प्रकार है—

"सं. १८५२ वर्षे कार्त्तिक कृष्णपक्षे पञ्चम्यां कर्म्मवाट्यां ॥पं.॥ भीमविजय मुनिना लिलेखि श्री फलवर्द्धिकायां चतुर्मासी चक्रे ॥ श्रीरस्तु ॥

B **संघपट्टक-अवचूरि,**

यह "प्रति" बाबू पूर्णचंदजी नाहर के संग्रह से उनके सुयोग्य-पुत्र राष्ट्रसेवी श्री विजयसिंहजी नाहर की उदारता से प्राप्त हुई थीं। वि. सं. २००३-४ के हमारे कलकत्ता चतुर्मास के समय इस की प्रतिलिपि करली गयी थी। प्रति सुंदर सुवाच्य व प्रायः शुद्ध है।

(२) A **संघपट्टक-टीका, कर्त्ता, लक्ष्मीसेन, रचनाकाल सं. १५१३,**

इसकी "प्रति" हमें रॉयल एशियाटिक सोसायटी ऑफ बेंगाल के

---

१ प्रकाशक, श्रावक जेठालाल दलसुख, अमदावाद, सं. १९६३, बृहद्वृत्ति का यह भाषान्तर पठनीय है और आज की स्थिति को देखते हुए विचारणीय भी।

२ आचार्य महाराज न केवल स्वयं अद्वितीय प्रतिभासम्पन्न विद्वान् ही थे अपितु विद्वत्परम्परा के निर्माता भी थे। आप के अधिकतर शिष्य उच्चकोटि के ग्रन्थ रचयिता व प्रखर पाण्डित्यपूर्ण विचारपरम्परा के स्रष्टा थे।

अन्तर्गत "ओरियण्टल लायब्रेरी" से प्राप्त हुई थी। सापेक्षत यह प्राचीन है।

अन्तिम इस प्रकार है—

॥ इति श्री सप्तपट्टकस्य टीका परिपूर्णा, लिखिता प. जिनयशोमेन, स्ववाचनार्थम् ॥

B सप्तपट्टक-टीका, यह "प्रति" अनुयोगाचार्य स्व० श्री केशरमुनिजी गणि के शिष्य मुनिवर प. बुद्धिमुनिजी गणिने प्रतिलिपि भेजी थी।

( २ ) A सप्तपट्टक-लघुवृत्ति, कर्ता-हर्षराज उपाध्याय,

यह "प्रति" हमें श्री अगरचंदजी नाहटा द्वारा प्राप्त हुई थी। मूल प्रति "भांडारकर ऑरियण्टल रीसर्च इन्स्टिटयूट"-पूना में सुरक्षित है। पत्र संख्या २७, प्रति प्राचीन व पच पाठ है। इस की लिपि बहुत सुन्दर और सुपाठ्य है। देखिये ब्लोक।

B सप्तपट्टक-लघुवृत्ति, यह "प्रति" अनुयोगाचार्य स्व० श्री केशरमुनिजी गणि के शिष्य मुनिवर प बुद्धिमुनिजी गणिने इस की प्रतिलिपि भिजवाई थी। मूल प्रति के लेखन प्रशस्ति इस प्रकार है—

संवत् १६०८ वर्षे माह सुदि ५ दिने शनिवारे श्रीखरतरगच्छे श्रीजिनमाणिक्य सूरिविजयराज्ये श्रीविक्रमनगरे गणधर-चोपडागोत्रे सा० देवराजस्तत्पुत्र सा० जगसिंह स्तत्पु० सा० कम्मा भा० श्रा० कौतिकदेजा: पु० रत्न सा० रायपाल सुरताण समारंभ प्रमुखपरिवारयुतेन सा० रायपालेन श्रावकगीतपस उद्यापने श्रीसप्तपट्टकलघुवृत्तिप्रतिर्विहरा पिता श्रीधनराजोपाध्यायानां। वाच्यमान चिरं नन्दतु ॥ शुभ कल्याणमस्तु। श्रीधनराजो पाध्यायशिष्ये प्रसादीकृता प्रतिरियं वा० जयसुन्दरगणे.। शुभ भवतु लेखकपाठकयो। कल्याणमस्तु। श्री।

आभार—

सर्वप्रथम हम परमपूज्य गुरुवर्य्य उपाध्याय पद विभूषित १००८ सुखसागरजी महाराज सा. के प्रति हम अपनी कृतज्ञता प्रकट करते हैं, जिनके साथ श्रम से यह

१ वं १००१-२००४ कलकत्ता में।

संस्करण तैयार हो सका। इस में प्रयुक्त प्रतियों के प्रेषण में जिन महानुभावों ( नाम ऊपर प्रासंगिक रूप से आ चुके हैं ) सहायता कर हमारा कार्य सरल किया, उनको, व पूज्य गुरुदेव के सदुपदेश से जिन जिन श्रावकोंने, ज्ञानवृद्ध्यर्थ आर्थिक मदद की, उन सब को धन्यवाद देना आवश्यक ही नहीं, अपितु अनिवार्य कर्त्तव्य समझते हैं। श्री जिनवल्लभ-सूरिजी महाराजा का जो चित्र ( काष्ठपट्टिका ) प्रकाशित किया जा रहा है, उसका ब्लोक बीकानेर से भँवरलालजी नाहटा द्वारा प्राप्त हुआ था। तदर्थ वे भी धन्यवाद के पात्र हैं।

इस के शोधन में दृष्टिदोष से या तथाकथित कारण से यदि स्खलना रह गई हों तो पाठक सहानुभूतिपूर्वक सुझाने का कष्ट करेंगे।

सिवनी, ( सी० पी० )
श्रा० शु० ७, स. २००९

शुभाकांक्षी,
**मुनि मंगलसागर**

# समर्पण

जगम—युगप्रधान—भट्टारक—१००८

श्री जिनकृपाचन्द्रसूरीश्वरजी महाराज

परम गुरुवर्य्य

के

करकमलों में श्रद्धापूर्वक

समर्पित

मुनि मगलसागर

# उपोद्घात

जुगपवरागमपीऊस–पाणपीणियमणाकया भव्वा । जेण जिणवल्लहेणं, गुरुणा तं सव्वहा वंदे ॥

जिस समय चैत्यवासी आचार्यगण ज्ञानवाद को प्रधानता देकर भगवत्प्ररूपित सैद्धान्तिक आचरणों की अवहेलना कर रहे थे, भगवन्नाम से ही चैत्यों में निवास कर रहे थे, मठपतियों की तरह चैत्यों के सर्वाधिकारी बन कर वैभव साम्राज्य में आनन्द–उत्सव मना रहे थे, उस समय में इस चैत्यवास की दुर्व्यवस्था से व्यथित होकर सर्वप्रथम आचार्य श्री हरिभद्रसूरिने इस दुराचार का उग्र विरोध किया था, पर इसका कोई ठोस परिणाम हुआ हो, कहा नहीं जा सकता ।

तदनन्तर प्रमुखरूप से उग्र विरोध करनेवाले आचार्य श्री जिनेश्वरसूरि हुए, जिन्होंने चैत्यवासियों की प्रमुख नगरी अणहिलपुरपत्तन में जाकर, महाराजा श्री दुर्लभराज के समक्ष चैत्यवासि आचार्यों के सन्मुख ही सैद्धान्तिक आचरणाओं की शुद्ध प्ररूपणा कर सुविहित पक्ष [ खरतर पक्ष ] की स्थापना की थी । सुविहित पक्षीय आचरणाओं के प्ररूपक और चैत्यवासी उन्मार्गगामिता के निर्देशक रूप में ही इस काव्यरचना हुई थी ।

काव्यकार–इस काव्य के प्रणेता 'श्रीजिनवल्लभगणि' हैं । यह इस काव्य ३८वीं कारिका से स्पष्ट है—

विभ्राजिष्णुमगर्वमस्मरमनासादं श्रुतोर्ध्वेन, सज्ज्ञानैर्गुमगि जिनं वरवपुः श्रीचैन्द्रिकाभेश्वरम् ।
वन्दे वर्ण्यमनेकधासुरनरैः शक्रेगं चैनंच्छिदं, दम्भारिं विदुषां सदा सुवचसाऽनेकान्तरङ्गप्रदम् ॥
॥ ३८ ॥ "जिनवल्लभेन गणिनेदं चक्रे"

ये जिनवल्लभ गणि कौन थे? कहा के थे? किनके शिष्य थे? इत्यादि विषयों का निर्णय बाह्य एवं अन्तरङ्ग प्रमाणो से किया जा सकता है।

श्रीजिनपतिसूरि शिष्य श्रीजिनपालोपाध्यायप्रणीत' खरतरगच्छालङ्कार युगप्रधानाचार्य गुर्वावली में और श्रीसुमतिगणिरचित गणधरसार्द्धशतक की बृहद्वृत्ति में इस प्रकार उल्लेख मिलता है।

जिनवल्लभ आसिका दुर्गनिवासी कूर्चपुरीय श्रीजिनेश्वराचार्य के शिष्य थे । सिद्धान्ताध्ययन के लिये पत्तन–स्थित आचार्यप्रवर श्रीअभयदेवसूरि के पास गये थे । आगमाध्ययनोपरान्त सुविहित आचरणाओं से प्रभावित होकर, गुरु जिनेश्वराचार्य की आज्ञा प्राप्त कर, चैत्यवास का त्याग कर उन्होंने अभयदेवाचार्य के पास उपसम्पदा ग्रहण की । इन्ही को अभयदेवाचार्य के विनेय प्रसन्नचन्द्राचार्य के शिष्य श्री देवभद्राचार्यने सं ११६७ चित्रकूट में अभयदेवाचार्य के पट्ट पर अभिषिक्त कर जिनवल्लभसूरि नाम उद्घोषित किया, और सं. ११६७ के ही कार्तिक कृष्णा द्वादशी के दिन उनका स्वर्गवास हुआ।

– इन तीन्हीं प्रसंगों की पुष्टि अन्य खरतरगच्छीय पट्टावलियों से भी होती है।

१ जिनवल्लभ आसिका दुर्गनिवासी चैत्यवासी श्रीजिनेश्वराचार्य के शिष्य थे ।

२ श्रीअभयदेवाचार्य के पास सिद्धान्तों के अध्ययन के लिये वे गये थे, और पीछे से आचार्यश्री के पास ही उपसम्पदा ग्रहण की थी, अर्थात् अभयदेव के ही शिष्य बने थे।

३ श्रीदेवभद्राचार्यने ही इन को अभयदेवाचार्य के पट्ट पर स्थापित किया था।

अन्तरंग प्रमाणों में स्वरचित (जिनवल्लभरचित) 'प्रश्नोत्तरैकषष्ठिशतक काव्य' जो उपसम्पदा से पूर्व ही रचा गया था उसमें वे श्रीजिनेश्वराचार्य को '१सद्गुरवो जिनेश्वरसूरय' सम्बोधन से और आचार्य श्रीअभयदेव को '२सद्गुरवोऽत्र चारुचरणश्रीसुभृता विश्रुता श्रीमदभयदेवाचार्या' सम्बोधन से व्यक्त करते हैं। इस से यह तो निश्चित हो ही जाता है कि जिनेश्वराचार्य इनके मूल दीक्षागुरु थे और सैद्धान्तिक (विद्यागुरु) गुरु थे आचार्य अभयदेव।

(२) इन्हीं श्रीजिनवल्लभगणिरचित सूक्ष्मार्थविचारसारोद्धार प्रकरण (सार्द्धशतक) पर बृहद् गच्छीय श्रीधनेश्वराचार्यने सं ११७१ में टीका की रचना की है। उसमें १५२ वें पद्य की व्याख्या करते थे लिखते हैं कि—

"जिणवल्लहगणिलिहियं" जिनवल्लभगणिनामकेन मतिमता सकलार्थसङ्ग्राहिस्थानाङ्गाद्युपाङ्गप्रधानादिशास्त्र वृत्तिविधानावाप्तावदातकीर्तिसुधाधवलितधरामण्डलानां श्रीमदभयदेवसूरीणां शिष्येण लिखितं कर्मप्रकृत्यादिगम्भीर शास्त्रेभ्यः समुद्धृत्य दृब्धं जिनवल्लभगणिलिखितम्।"

इन प्रमाणों से यह स्पष्ट प्रतीत है कि 'जिनवल्लभगणि नवाङ्गीवृत्तिकारक आचार्य अभयदेवसूरि के शिष्य थे।'

तदुपरान्त सुविहितपक्षीय जिनेश्वराचार्य के पट्टधर आचार्यप्रवर श्रीजिनचन्द्रसूरि रचित संवेग रंगशाला की पुष्पिका "इति श्रीमज्जिनचन्द्रसूरिकृता तद्विनेय श्रीप्रसन्नचन्द्रसूरि समभ्यर्थितेन गुणचन्द्रगणि [ना] प्रतिसंस्कृता, जिनवल्लभगणिना च संशोधिता संवेगरङ्गशालाऽऽराधना समाप्ता।" से यह नूतनवस्तु प्रकाश में आती है कि-गुणचन्द्र गणि जो आचार्य बनने पर देवभद्राचार्य के नाम से प्रसिद्ध हुए उनने संवेगरंगशाला-जिसकी रचना ११२५ में हुई थी-उसका संस्कार किया और श्रीजिनवल्लभ गणिने उसका संशोधन किया। इस से भी यही सिद्ध होता है कि, वि सं ११२५ के पूर्व ही श्रीजिनवल्लभने अभयदेवाचार्य के पास उपसम्पदा ग्रहण करली थी।

श्रीजिनवल्लभ उपसम्पदा पूर्व 'गणि' नहीं थे यह बात के-उपसम्पदा पूर्व रचित उनके जो दो ग्रन्थ प्राप्त होते हैं। उनकी निम्ननिर्दिष्ट पङ्क्तियों से प्रतीत होता है-प्रथम कृति पार्श्वनाथस्तोत्र पद्य ११ [आदि'-नमस्त्रैलोक्याधिपतिरतिस्तोमविनयत्'] में '३मया प्रथमकाव्यमात्र' कह कर अपना नाम केवल

---

१ "कः स्यादम्भसि वारिधावभवति ? का द्योतिका ? सत्य ?,
लोकं (कं) प्राह हय प्रयोगनिपुणैः कः शब्दधातुः स्मृत ?।
मूते पालयिताऽत्र ? दुस्तरतरः भवः शुष्यतोऽम्भोनिधेः ?
ब्रूहि श्रीजिनवल्लभस्तुतिपदं कीदृग्विधा के सताम् ?" ॥ १५६॥ 'सद्गुरवो जिनेश्वरसूरय'

२ 'कं पातुरत्राधिकः ? का भवतो मीरी मन प्रीतये ? सालङ्कारविदग्धया वद कया रज्यन्ति विद्वज्जना ?। पाणौ किं सुरविद्विषि ? सुविताः ध्यायन्ति वा के सदा ?, के वा सद्गुरवोऽत्र चारुचरणश्रीसुभृता विश्रुता ?॥१६०॥
'श्रीमदभयदेवाचार्या'"

३ अज्ञानाद्गुणिनि स्थिते प्रथमकाव्यमात्रात् कवित्वस्य यद्, ।किंचिद्वसभ्यमनदर्शविम्बमपदशाषायुक्मुषे मया ॥११॥

[1]जिनवल्लभ सूचित करते हैं। और इसी प्रकार **प्रश्नोत्तरैकषष्टिशतककाव्य** में भी '[2]जिनवल्लभेन' पद से भी यही सूचित करते हैं। अत. उपसम्पदा पश्चात् ही आचार्य अभयदेवने 'गणि' पद प्रदान किया हो, ऐसा प्रतीत होता है।

इनके अलावा इन्हीं के पट्टधर युगप्रधान **श्रीजिनदत्तसूरि** स्वरचित गणधरसार्द्धशतक में ५० आर्याओं से '**सूरिजिनवल्लहो**' की स्तुति करते हैं तथा अपने प्रणीत समस्त ग्रन्थों में 'जिनवल्लभसूरि' को नमस्कार एवं उनकी स्तुति तो श्रद्धापूर्वक करते ही हैं।

अतः ऊपरि उल्लिखित बाह्य एवं अन्तरङ्ग प्रमाणों से यह निश्चित है कि जिनवल्लभ गणि सुविहित [ खरतरगच्छीय ] श्रीअभयदेवसूरि के शिष्य एवं पट्टधर थे।

## ग्रन्थरचना।

गणिवर १२वीं शती के उद्भट विद्वानों में से एक थे। इनका अलङ्कारशास्त्र, छन्दशास्त्र, व्याकरण, दर्शन, ज्योतिष और सैद्धान्तिक विषयों पर एकाधिपत्य था। इनने अपने जीवनकाल में विविध विषयों पर सैकड़ों ग्रन्थों की रचना की थी, किन्तु दैव दुर्विपाक से बहुत से अमूल्य ग्रन्थ नष्ट हो गए। और इस वजह इस समय इनके केवल ४३ ग्रन्थ ही प्राप्त होते हैं। उपलब्ध ग्रन्थों की तालिका निम्न है—

१ सूक्ष्मार्थविचारसारोद्धार प्रकरण ( सार्द्धशतक ), २ आगमिकवस्तुविचारसार प्रकरण ( षडशीति ), ३ पिण्डविशुद्धि प्रकरण, ४ द्वादशकुलक, ५ धर्मशिक्षा प्रकरण, ६ संघपट्टक, ७ पौषधविधि प्रकरण, ८ प्रतिक्रमण समाचारी प्रा. गा ४०, ९ आप्तपरीक्षा ( उल्लेख-षडावश्यक बाला. तरुणप्रभसूरिकृत ), १० प्रश्नोत्तरैकषष्टिशतकाव्यम्, ११ शृङ्गारशतक ( अनुपलब्ध ), १२ स्वप्नाष्टकविचार ( अनुपलब्ध ), १३ अष्टसप्तति ( अनुपलब्ध ), १४ सर्वजीवशरीरावगाहना स्तव प्रा गा. , १५ श्रावकव्रतकुलक प्रा. गा. , १६–२० आदिनाथादि चरित्र पञ्चक स , २१ वीरचरित्र ( जयमवत्रण० ) प्रा गा. १५, २२ भावादिवारण स्तोत्र गा ३०, २३ लघु अजितशान्तिस्तव ( उल्लासि० ) प्रा गा. १७, २४ पंचकल्याणकस्तव ( सम्मं नमिउण० ) प्रा गा २६, २५ सर्वजिनपञ्चकल्याणक स्तव ( पणमिय सुर० ) प्रा. गा. ८, २६ पञ्चकल्याणक स्तोत्र ( प्रीतिद्वात्रिंशत् ) सं पद्य १३, २७ कल्याणक स्तव ( पुरन्दरपुरस्पर्द्धि ) सं. पद्य ७, २८ महाभक्तिगर्भासर्वविज्ञप्तिका ( लोयालोय० ) प्रा गा. २७, २९ पार्श्वस्तोत्र ( नमस्यद्गीर्वाण ) स. पद्य ३३, ३० पार्श्व स्तोत्र ( पायात्पार्श्व. ) सं पद्य ३९, ३१ पार्श्वस्तोत्र ( सिरि-भवणथंभणपुरे ) प्रा. गा ११, ३२ पार्श्व स्तोत्र ( त्वमेव माता त्वं पिता ) सं. प. ९, ३२ पार्श्व स्तोत्र ( ) , ३४ महावीरविज्ञप्तिका ( सुरनरवइकयवंदण ) प्रा. गा. १२, ३५ वीतरागस्तुति. ( देवाधीशकृते ) सं प १०, ३६ ऋषभजिन स्तोत्र ( सयलभुवणिंद ) प्रा. गा ३३, ३७ क्षुद्रोपद्रवहरपार्श्वस्तोत्र ( नमिरसुरासुर ) प्रा. गा. २२, ३८ नंदीश्वरस्तोत्र ( वंदिय नंदिय ) प्रा. गा. २५, ३९ सर्वजिनस्तोत्र ( प्रीतिप्रसन्नमुख ) सं प. २३, ४० चतुर्विंशति जिन स्तोत्र ( भीमभव. ) प्रा. गा १४४, ४१ ऋषभस्तुति. ( मरुदेवीनाभि० ) प्रा गा. ४, ४२ सरस्वती स्तोत्र ( सरभसलसद् ) सं. प २५, ४३ नवकारस्तव ( किं किं कप्पतरु ) अपभ्रंश १३।

---

१. पद्य ३२. २ पद्य १५९, १६०.

इन ¹ग्रन्थों में सार्द्धशतक, षडशीति और ¹पिण्डविशुद्धि ये तीनों ही सैद्धान्तिक ग्रन्थ बहुत ही महत्व के थे। इन ग्रन्थों पर आचार्य मलयगिरि, धनेश्वराचार्य, हरिभद्राचार्य श्रीचन्द्राचार्य आदि ने तत्काल ही अर्थात् १२वीं शती में ही टीकाएं रचकर इनकी सार्वजनिक उपयोगिता घोषित की, और इनके प्राय समग्र ग्रन्थों पर अनेकों टीकाएं प्राप्त होती हैं।

१ इनके समग्र मूल ग्रन्थों का 'वल्लभभारती' के नाम से मैं सम्पादन कर रहा हूँ। उसमें 'गणिजी' के काव्यवैशिष्ट्य पर प्रकाश डालूंगा। अत यहां पर उनकी विद्वत्प्रतिभा पर विचार नहीं कर रहा हूँ।

## २ क्या पिण्डविशुद्धि के कर्त्ता पृथक् हैं?

वर्त्तमान युग में कई मुनिगण 'पिण्डविशुद्धि के कर्त्ता खरतर जिनवल्लभ नहीं है किन्तु इसी नाम के कोई पृथक् आचार्य की यह रचना है' ऐसा मानते हैं। उनमें अग्रगण्य मान्य पन्यास मुनि-मानविजयजी मानते हैं। वे अपनी ¹पिण्डविशुद्धि की प्रस्तावना में गच्छव्यामोह से अनेक बातें इतिहासविरुद्ध, प्रमाणाभाव सह, स्वकपोलकल्पनोद्भावित अनेक प्रकारकी शंकाएं उपस्थित कर ऐसा प्रतिपादित करते हैं कि-श्री जिनेश्वरसूरि श्रीअभयदेवसूरि सुविहितपक्षीय (खरतरगच्छीय) नहीं थे, उनका यह प्रतिपादन कहां तक युक्तियुक्त है? इसका विचार मैं अपनी वल्लभभारती' की प्रस्तावना में विशदरूप से करूंगा। किन्तु जिनवल्लभ के सम्बन्ध में जो कुछ लिखा है उसका सारांश प्रस्तावना पृष्ठ २-३-४ में निम्नलिखित है—

"१ जिनवल्लभसूरि खरतर है इस प्रकार का प्रलाप स्वगच्छ का उत्कर्ष बढाने के लिये किया गया है।

२ षट् कल्याणक की उत्सूत्रप्ररूपणा करने के कारण खरतर जिनवल्लभ को संघबहिष्कृत किया गया था अत अभयदेवाचार्य के शिष्य भी नहीं हो सकते।

३ तत्कालीन रचित टीकाओं में किसी भी टीकाकार आचार्यने यह निर्देश नहीं किया कि वे खरतर गच्छीय थे और अभयदेवाचार्य के शिष्य थे।

४ ऐसे संघ बहिष्कृत उत्सूत्र प्ररूपक के ग्रन्थ पर श्रीचन्द्रसूरि जसे समर्थ टीकाकार टीका नहीं रच सकते। अत यह सुस्पष्ट है कि पिण्डविशुद्धिकार खरतर नहीं हैं किन्तु पृथक् एतन्नामधारक कोई आचार्य हैं।

इस मान्यता पर विचार करें तो केवल यही प्रतीत होता है कि प्रस्तावना लेखक ऐतिहासिक परंपराओं से अनभिज्ञ हैं। प्रमाणों में केवल सेनप्रश्न का प्रमाण दिया है। इस प्रमाण से भी किसी प्रकार पिण्डविशुद्धिकार पृथक् हैं, इस विषय में कोई प्रकाश नहीं पडता।

दूसरी बात-जिनवल्लभसूरि १२वीं शताब्दि में हुए हैं और सेनप्रश्नकार १७वीं शताब्दि में तथा सेनप्रश्न की रचना भी उपाध्याय धर्मसागरजी के उन्मार्गप्ररूपणा के पश्चात् ही हुई है अत धर्मसागरीय ग्रन्थों का प्रभाव इस पर पूर्णरूप से पडा है। अत ऐसी अवस्था में ग्रन्थकार के जीवन और ग्रन्थों पर विचार करने के लिये सेनप्रश्न का उपयोग कथंचित् भी नहीं किया जा सकता। परन्तु तत्कालीन प्राप्त प्रमाणों के आधार पर ही निर्णय करना चाहिये कि-क्या जिनवल्लभ उत्सूत्रप्ररूपक थे? संघबहिष्कृत थे? और अभयदेवाचार्य के शिष्य नहीं थे?—

'गणिजी' की षट्कल्याणक प्ररूपणा-उत्सूत्रप्ररूपणा नहीं थी, किन्तु सैद्धान्तिक प्ररूपणा ही थी। यदि उत्सूत्रप्ररूपणा होती तो तत्कालीन समग्र गच्छों के आचार्य इसका उग्र विरोध करते, और दुर्दम

१ श्रीचन्द्रसूरि टीका सह विजयदानसूरि ग्रन्थमाला सूरत सं १९९५ में प्रकाशित।

कदम भी उठाते !—पर आश्चर्य है कि इस प्ररूपणा का किसी भी आचार्यने इसका विरोध किया हो ऐसा प्रमाण प्राप्त नहीं होता है। प्रत्युत प्रतिपादन के प्रमाण अनेकों उपलब्ध होते हैं। अतः यह सिद्ध है कि—यह प्ररूपणा तत्कालीन समग्र आचार्यों को मान्य-सी ही थी।

परन्तु इसका सर्वप्रथम विरोध, १७वीं शती में 'खरतरों के उपजीव्य न हों' इस दृष्टिबिन्दु को रखकर अभयदेवाचार्य को पृथक् करने के निमित्त उद्भट विद्वान् उपाध्याय धर्मसागरजीने किया। तत्पश्चात् यह वाद गच्छवाद के रूप में स्वीकृत हो गया और परम्परा से चलता रहा, जो आज भी विद्यमान है।

उ० धर्मसागर को इस उन्मार्ग प्ररूपणा के कारण तत्कालीन तपगच्छ सम्राट् पू. **श्रीविजयदानसूरिने** ७ बोल निकालकर, इनके एतद्विषयक ग्रन्थों को जलशरण किया, और उ०जी को गच्छबहिष्कृत[1] भी। इसी प्रकार सूरिसम्राट् **श्रीहीरविजयसूरिजी** म०ने भी इनके प्रति ११ बोलों का आदेशपत्र निकाला था। अत. **ऐसे [2]व्यक्ति का विरोध शास्त्रसम्मत नहीं माना जा सकता।**

और **जिनवल्लभ गणिने** अपने स्तोत्रों में सामान्यापेक्षया पंचकल्याणक लिखे हैं तो भी विशेषापेक्षया षट्कल्याणक की प्ररूपणा में किञ्चिद् भी बाधा उपस्थित नहीं होती।

वस्तुतः षट्कल्याणक प्ररूपणा शास्त्रोचित है या नहीं? इसका विचार मेरे दिवंगत पूज्येश्वर गुरुदेव **श्रीजिनमणिसागरसूरिजी** म०ने **षट्कल्याणकनिर्णयः** में विशदरूप से किया है, उसको देखकर ही निर्णय करना चाहिए।

अतः जब 'जिनवल्लभ' उत्सूत्रप्ररूपक ही नहीं हैं तो फिर संघ बहिष्कृत की मान्यता तो कपोलकल्पित ठहरती ही है। यदि प्रस्तावना लेखक के पास संघबहिष्कृत का कोई भी प्रमाण हो तो उपस्थित करें। उस पर अवश्यमेव विचार किया जायगा।

पूर्वोद्धृत सार्द्धशतक की टीकानुसार नवाङ्गवृत्तिकारक श्रीअभयदेवसूरि के शिष्य जिनवल्लभ हैं ही।

यदि विचार करें कि पिण्डविशुद्धिकार पृथक् है? तो फिर वे कौन थे और किस गच्छ के थे? इनके एतद्विषयक कोई प्रमाण नहीं मिलता है। तत्कालीन ३-४ शताब्दियों में खरतर जिनवल्लभगणि से पृथक् कोई आचार्य की उपलब्धि ही जैन साहित्य में नहीं होती है। और इनके सम्बन्ध में खरतरगच्छीय गुरुपरम्पराओं के अतिरिक्त उल्लेख भी नहीं मिलता। अतः यह सिद्ध है कि पिण्डविशुद्धिकार जिनवल्लभगणि पृथक् नहीं है, किन्तु अभयदेवाचार्य के शिष्य खरतरगच्छीय ही है। और इनके सिद्धान्त सर्वमान्य भी हैं।

**संघपट्टक**—प्रस्तुत काव्य की रचना 'गणिजी' के जीवन की चरमोत्कर्ष कहानी है। उपसम्पदा के पश्चात् चैत्यवास का सक्रिय विरोध कर आमूलोच्छेदन करने का प्रयत्न किया और इस प्रयत्न में इनको पूर्ण सफलता भी प्राप्त हुई। इनके पश्चात् युगप्रधान **श्रीजिनदत्तसूरि** और आचार्यप्रवर **श्रीजिनपतिसूरिने** तो अपने सबल प्रयत्नों से इस परंपरा का उच्छेदन ही कर डाला था। गणिजीने इस लघु काव्य में तत्कालीन चैत्यवासी आचार्यों की शिथिलता, उनकी उन्मार्गप्ररूपणा और सुविहितपथ-प्रकाशक गुणिजनों के प्रति द्वेष इत्यादि का सुन्दर विश्लेषण किया है।

इस काव्य में ४० पद्य हैं। उनमें प्रथम श्लोक में श्रीपार्श्वनाथ को नमस्कार कर 'पण्डितों को कुपथ

---

१. देखें श्री अगरचन्द भवरलाल नाहटा द्वारा लिखित युगप्रधान जिनचन्द्रसूरि।

२. ऐतिहासिक राससंग्रह. (विजयतिलकसूरि-रास) भाग ४।

त्याग करनेका उपदेश दिया है। दूसरे पद्य में श्रोताओं की योग्यता को दिखलाया है। ३-४ पद्य में उपमाओं द्वारा चैत्यवासियों को 'जिनोक्ति प्रत्यर्थी' सिद्ध करते हुए पूर्व पद्य में १ औद्देशिक भजन, २ जिनगृह में निवास, ३ वसतिवास के प्रति मात्सर्य, ४ द्रव्यसंग्रह, ५ श्रावक भक्तों के प्रति ममत्व, ६ चैत्य स्वीकार (चिन्ता), ७ गद्दी आदि का आसन, ८ सावद्य आचरण, ९ सिद्धान्तमार्ग की अवज्ञा और १० गुणियों के प्रति द्वेष का विवेचन। इस प्रकार विवेचनीय दश द्वारों का उल्लेख किया है। ६ से ३३ पद्य पर्यन्त दश द्वारों का विशद् वर्णन किया है। ३४-३५ में ग्रन्थरचना का कारण कह कर, ३६-३७ में सुविहित साधु वृन्द के पूताचार की प्रशंसा की है। ३८वें ३९-४०वें पद्य में भस्मकम्लेच्छ सैन्य की उपमा प्रदान कर कदर्थना करते हुए उपसंहार किया है।

इस लघुकाय धार्मिक ग्रन्थ को भी गणिश्रीने निदर्शना अप्रस्तुत प्रशंसा अर्थान्तरन्यास, तुल्ययोगिता, रूपक, उपमा, अनुप्रासादि अलंकारों से सज्जित कर अपनी बहुमुखी प्रतिभा का सुन्दर परिचय दिया है। साथ ही इस में स्रग्धरा शार्दूलविक्रीडित मन्दाक्रान्ता शिखरिणी, द्विपदी, पृथ्वी मालिनी वसन्ततिलका आदि ८ पृथक् २ छन्दों में ग्रथित कर छन्दशास्त्र पर एकाधिपत्य भी सिद्ध किया है। समग्र काव्य ओज गुण से परिपूर्ण होने के कारण पाठक के हृदय में भी आनन्द ही उत्पन्न कर देता है।

**सङ्घपट्टक की टीकाएँ**—इस लघु काव्यग्रन्थ पर अनेक मनीषियोंने भाष्य वृत्ति, अवचूरि, बालावबोध आदि रच कर इसकी महत्ता, उपयोगिता स्थापित की है। वर्तमान में इस पर वृत्ति आदि ८ आठ कृतियें ही प्राप्त होती हैं। जिसकी तालिका निम्नलिखित है।

| | | | | | |
|---|---|---|---|---|---|
| १ बृहद्वृत्ति | जिनपतिसूरि | २ लघुवृत्ति | श्रीलक्ष्मीसेन | ३ लघुवृत्ति | हर्षराज गणि |
| ४ अवचूरि | उ साधुकीर्ति | ५ पञ्जिका | देवराज | ६ पद्यवृत्ति | विवेकरत्नसूरि |
| ७ पद्यवृत्ति | (?)× | ८ बालावबोध उ लक्ष्मीवल्लभ। | | | |

इनमें आचार्य श्रीजिनपतिसूरि की टीका सब से बड़ी है और सर्वश्रेष्ठ भी। यह टीका अनुवाद सह पूर्वमें प्रकाशित हो चुकी है। फिर हाल यह ग्रन्थ अवचूरि और दो लघुवृत्तियों के साथ प्रकाशित हो रहा है।

**अवचूरिकार**—महोपाध्याय **साधुकीर्त्ति** खरतरगच्छीय **श्रीजिनभद्रसूरि** की परम्परा में वाचनाचार्य श्रीअमरमाणिक्य के शिष्य थे। आपने सं १६१७ में युगप्रधान श्रीजिनचन्द्रसूरि रचित **पौषधविधिप्रकरणवृत्ति** का संशोधन किया था। सं १६२५ में आगरा में सम्राट् **अकबर** की सभा में पौषधविधि विषय में श्री **बुद्धिसागरजी** के साथ शास्त्रार्थ कर उन्हें निरुत्तर किया था। १६३२ में वैशाख सुदि १५ को श्रीजिनचन्द्रसूरिजीने आपको उपाध्याय पद प्रदान किया था। सं १६४६ माघ वदि १४ को जालोर में आप का स्वर्गवास हुआ था। आपने अपने जीवनकाल में **सत्तरभेदी पूजा** **सप्तस्मरण बालावबोध** आदि अनेकों ग्रन्थों की रचना की जिन में २३ छोटे-मोटे ग्रन्थ प्राप्त होते हैं।

प्रस्तुत अवचूरि की रचना १६१९ माघ सुदि की ५ पञ्चमी[३] को पूर्ण हुई है। यह अवचूरि होते हुए भी सुस्पष्ट प्रकाशित होने के कारण टीका का ही सादृश्य रखती है।

**लक्ष्मीसेन**—इनके सम्बन्ध में अन्य कोई भी उल्लेख प्राप्त नहीं होते हैं। केवल इस टीका की प्रशस्ति[४] से ही ज्ञात होता है कि—वे खरतरगच्छीय जिनकीर्तिवाले श्रावक धीरदास के पौत्र और धीरवीर

× नं ५-६-७, जिनरत्नकोशानुसार १ देखें युगप्रधान जिनचन्द्रसूरि पृ १९२-से उद्धृत
२ इसी ग्रन्थ के पृ २३ ३ इसी ग्रन्थ के पृ ४३-४४ श्लो २-३-४-५

**श्रीहमीर** के पुत्र थे। इन्होंने यह **स्फुटार्था** नाम की टीका रचना सं. १५१३ में की है। संघपट्टक जैसे दुसरे काव्य की टीका १६ वर्ष की अवस्था में बनाना उन के पाण्डित्य का द्योतक है।

यह स्फुटार्था नाम की टीका सामान्य सी ही है। टीकाकार कई २ स्थलों पर शाब्दिक पर्यायों का कथन त्याग कर भावार्थ-तात्पर्य मात्र ही प्रकट करने को उत्सुक प्रतीत होती है, अत. कई स्थलों का विवेचन अस्पष्टसा रह गया है। साथ ही इनके सन्मुख बृहट्टीका होने के कारण कइ स्थानों में उन्हीं शब्दों का अक्षरसः वाक्यविन्यास कर दिया है।

इस में आश्चर्य की वस्तु यह है कि इस काव्य की केवल २९ पद्य की टीका-प्राप्त नही होती है। इस सम्पादन में **पू. उपाध्यायजी**ने तीन प्रतियों का उपयोग किया है, और इस की एक प्रति मेरे संग्रह में भी है, पर किसी में भी इस श्लोक की टीका दृष्टिगोचर नहीं होती हैं। अतः इस प्रकाशन में स्थानरिक्त न रखकर श्रीहर्षराज गणि की ही २९वें पद्य की टीका के रूप में दी है।

**हर्षराज**—ये **श्रीजिनभद्रसूरि** के शिष्य **महोपाध्याय श्रीसिद्धान्तरुचि** के प्रशिष्य उ. **श्री अभयसोम** के शिष्य थे। इन के सम्बन्ध में विशेष वृत्तान्त ज्ञात नहीं होता है। इस की प्रशस्ति में रचना-संवत् का उल्लेख भी नहीं है, पर महो० श्री सिद्धान्तरुचि के प्रशिष्य होने कारण इसकी रचना १६वीं शताब्दि के प्रारभ में ही हुई है।

यह लघुवृत्ति वस्तुत. लघुवृत्ति नही है, किन्तु श्रीजिनपति की बृहट्टीका का **संक्षिप्त संस्करण मात्र** ही है। बृहट्टीका मे प्रपंचित पक्ष विपक्षप्रतिपादन, आगमिक उद्धरण इत्यादि का त्याग कर मूलग्रन्थानुसारिणी समग्र टीका का प्रारम्भ से अन्त तक पंक्ति-पंक्ति अक्षर-अक्षर का उद्धरण कर संक्षिप्त संस्करण तैयार किया है। उदाहणार्थ केवल ३८वें पद्य की टीका की कुछ पंक्तियें ही देखिये—

**जिनपतिसूरि टीका**—"साम्प्रतं प्रकरणकार. प्रकरणं समाप्नुवन्निष्टदेवतास्तवछद्मनाऽवसानमङ्गलं सूचयंश्चक्रबन्धेन स्वनामधेयमाविर्विभावयिषुराह—

'**विभ्राजिष्णु**'। व्याख्या—जिनं वन्दे इति सम्बन्ध.। 'विभ्राजिष्णुं' त्रिभुवनातिशायि चतुस्त्रिंशदति-शयत्वेनात्यन्तं शोभमानं, 'अगर्वं' उच्छिन्नाऽहङ्कारं 'अस्मरं' मथितमन्मथं 'श्रुतोल्लङ्घने' सिद्धान्ताज्ञाऽतिक्रमे 'अनाशादं' आशां-मनोरथ ददाति-पूरयति आशाद., न आशादो-अनाशादस्तं श्रुताऽऽज्ञाऽतिक्रमकारिणः पुंसो नानु-मन्तारमित्यर्थ.। 'सज्ज्ञानद्युमणिं' सज्ज्ञानेन-केवलज्ञानेन लोकालोकावभासकत्वाद् भास्वन्त 'जिन' तीर्थकरं इत्यादि।

अतः यह स्पष्टतया प्रतिपादित हो जाता है कि, यह केवल 'संस्करण' ही है, मौलिक टीका नहीं।

पूज्य उपाध्यायपदालङ्कृत मुनि-**श्रीसुखसागरजी** म.ने प्रस्तुत उपोद्घात लिखने का जो मुझे अवसर दिया है एतदर्थ मैं आपका कृतज्ञ हूँ।

अहमदावाद
लुणसावाडा जैन उपाश्रय
१९-९-५२।

पूज्य श्रीजिनमणिसागरसूरीश्वरान्तेवासि
शा. वि. उपाध्याय **विनयसागर**
'साहित्याचार्य, जैन दर्शनशास्त्री,
साहित्यरत्न [संस्कृत, हिन्दी] काव्यतीर्थ।



॥ श्रीस्तम्भनपार्श्वनाथाय नमः ॥

श्रीखरतरगच्छालङ्कार–नवाङ्गीवृत्तिकार–श्रीजिनअभयदेवसूरिशिष्य–कवीन्द्रचूडामणी
श्रीजिनवल्लभसूरिविरचित ।

जिनभद्रसूरिशाखान्तर्गत–साधुकीर्त्तिगणिनिर्मितावचूरीसमलङ्कृतः

# श्रीसंघपट्टकः

श्रीमत्पार्श्वजिनं नत्वा, सर्वसम्पत्तिदायकम् ।
सङ्घपट्टकशास्त्रस्या–ऽक्षरार्थं वितनोम्यहम् ॥ १ ॥

इह हि पुरा दशशताशीतिवर्षे श्रीमदणहिल्लपत्तने दुर्लभराजसभायां चैत्यवासिनो विनिर्जित्य प्राप्तखरतरबिरुद श्रीजिनेश्वरसूरि', तत्पट्टे जिनचन्द्रसूरि', तद्विनेय' श्री स्तम्भनकपार्श्वप्राकट्यकृद् नवाङ्गीवृत्तिविधाता च श्रीअभयदेवसूरि', तच्छिष्य. श्री जिनवल्लभसूरि' शिथिलाचारनिरासाय परोपकारकरणाय च श्रीमत्सङ्घस्य पट्टकरूप श्रीसघराज्यपट्टकशास्त्र चकार, तस्याद्यकाव्यम्—

वह्निज्वालावलीढ कुपथमथनधीर्मातुरस्तोकलोक,–
स्याग्रे सदर्श्य नाग कमठमुनितपः स्पष्टयन् दुष्टमुच्चै ।
यः कारुण्यामृताब्धिर्विधुरमपि किल स्वस्य सद्य प्रपद्य,
प्राज्ञैः कार्यं कुमार्गस्खलनमिति जगादेव देव स्तुमस्तम् ॥ १ ॥

व्याख्या—"वह्नि०" त देव स्तुम । तमिति क ? यो भगवान् मातुरग्रे अस्तोकलोकस्य–समस्तलोकस्य अग्रे नाग–सर्पं सदर्श्य–दर्शयित्वा प्राज्ञै –पण्डितै 'कुमार्गस्खलन कार्यम्' इति जगादेव–इति कथयामासेव । कथम्भूत नाग ? वह्निज्वालावलीढम्–अग्निज्वालाव्याप्तम् । कथम्भूतो भगवान् ? कुपथस्य–कुमार्गस्य मथने धी'–बुद्धिर्यस्य । पुनर्भगवान् किं कुर्वन् ? उच्चै –अत्यर्थं कमठमुनितप दुष्ट स्पष्टयन्–प्रकटी कुर्वन् । कथम्भूतो भगवान् ? कारुण्यमृताब्धि –कारुण्यम्यामृतस्य अब्धि –समुद्र । किं कृत्वा कुमार्गस्खलन कार्यं ? तत्राह–'किल' इति सत्ये स्वस्य–आत्मन सद्य–शीघ्र विधुरमपि–कष्टमपि प्रपद्य–अङ्गीकृत्य । इति प्रथमकाव्यार्थ. ॥ १ ॥

कल्याणाभिनिवेशवानिति गुणग्राहीति मिथ्यापथ,-
प्रत्यर्थीति विनीत इत्यशठ इत्यौचित्यकारीति च ।
दाक्षिण्यीति दमीति नीतिभृदिति स्थैर्यीति धैर्यीति सद्,-
धर्मार्थीति विवेकवानिति सुधीरित्युच्यसे त्वं मया ॥ २ ॥

व्याख्या-कल्या० ॥ कल्याणः-शुभः, अभिनिवेशः-मनःपरिणामो यस्येति कल्याणाभिनिवेशवान् इति । गुणग्राहीति । मिथ्यापथस्य-कुमार्गस्य प्रत्यर्थी-वैरी, इति । विनीत इति । अशठः-सरल(इति) औचित्यकारीति-योग्यताकारीति । च-पुनः दाक्षिण्यीति । दमी-जितेन्द्रिय इति । नीतिभृत्-न्यायमार्गधारक इति । स्थैर्यी-स्थिरत्ववान् इति । धैर्यी-धीरत्ववानिति । सद्धर्मस्यार्थीति । विवेकवानिति । सुधीः-सुबुद्धिरिति । हे शिष्य ! एवंगुणविशिष्टस्त्वम्, अत एव मयोच्यसे त्वमिति, त्वां प्रत्यहं वच्मीति काव्यार्थः ॥ २ ॥

इह किल कलिकालव्यालवक्त्रान्तराल-स्थितिजुपि गततत्त्वप्रीतिनीतिप्रचारे ।
प्रसरदनवबोधप्रस्फुरत्कापथौघ,-स्थगितसुगतिमार्गे सम्प्रति प्राणिवर्गे ॥ ३ ॥

प्रोत्सर्पद्भस्मराशिग्रहसखदशमाश्चर्यसाम्राज्यपुष्य,-
न्मिथ्यात्वध्वान्तरुद्धे जगति विरलतां यति जैनेन्द्रमार्गे ।
सद्दृक्छिष्टद्विष्टमूढप्रखलजडजनाम्नायरक्तैर्जिनोक्ति,-
प्रत्यर्थी साधुवेषैर्विषयिभिरभितः सोऽयमप्राथि पन्थाः ॥ ४ ॥

व्याख्या-इह० ॥ प्रो० ॥ विषयिभिः-विषयसेवकैः साधुवेषैः-लिङ्गधारिभिर्हीनाचारैः चैत्यवासिभिः अभितः-समन्तात् सोऽयं पन्था-मार्गः अप्राथि-विस्तारितः। क सति ? सम्प्रति इह-दुष्षमाकाले किलेति सत्ये प्राणिवर्गे एवंविधे सति । कथम्भूते प्राणिवर्गे ? कलिकाल एव-दुष्षमाकाल एव व्यालः-सर्पस्तस्य वक्त्रान्तरालं-मुखान्तरालं, तत्र स्थितिः-स्थानं तां जुपते-सेवते यः सः । पुनः कथम्भूते ? गततत्त्वप्रीतिनीतिप्रचारे-गतौ तत्त्वप्रीतिः, नीतिप्रचारश्च न्यायप्रचारस्तौ यस्य सः । पुनः कथम्भूते ? प्रसरत्-प्रसरणशीलो योऽनवबोधः-अज्ञानं तेन प्रस्फुरत्कापथौघः-कुमार्गसमूहस्तेन स्थगितः-आच्छादितः सुगतिमार्गः-देवगत्यादिसम्बन्धो यस्य सः ॥३॥ पुनः क सति ? जगति जैनेन्द्रमार्गे विरलतां याति सति । कथम्भूते जैनेन्द्रमार्गे ? "प्रोत्सर्प" प्रोत्सर्पन्-उल्लसत् यः भस्मराशिग्रहस्तस्य सखा-मित्रं यद्दशमाश्चर्यम्-असंयतिपूजालक्षणं तस्य साम्राज्यं तेन पुष्यन्-प्रवर्द्धन् मिथ्यात्वमेव ध्वान्तं-तमस्तेन

रुद्धे । कथम्भूतं माधुर्नेपैः ?, मदक्लिष्टो-रौद्राध्यवसायवान् द्विष्टो-मत्सरी मूढः-मूर्खैः प्रखल.-दुर्जन. जडः-दुर्मेधा एवम्भूतो यो जनस्तस्य सङ्घस्तस्य आम्नायः-परम्परा तत्र रक्तैः । कथम्भूतः पन्था ? जिनोक्तेः-भगवद्वचनस्य प्रत्यर्थीति काव्यार्थः ॥ ४ ॥

अथ द्वारमाह—

यत्रौद्देशिकभोजन जिनगृहे वासो वसत्यक्षमा,
स्वीकारोऽर्थगृहस्थयचैत्यसदनेष्वप्रेक्षिताद्यासनम् ।
सावद्याचरितादर श्रुतपथाऽवज्ञा गुणिद्वेषधी ,—
धर्म कर्महरोऽत्र चेत्पथि भवेन्मेरुस्तदाऽब्धौ तरेत् ॥ ५ ॥

व्याख्या-यत्रौ० ॥ यत्र मार्गे औद्देशिकस्य-आधाकर्मणो भोजनम् ॥ १ ॥ जिन गृह वासः-वसनम् ॥ २ ॥ वसत्यक्षमा-वमतिम्-उपाश्रय प्रति अक्षमा-मात्सर्यम् ॥ ३ ॥ अर्थ ॥ ४ ॥ गृहस्थः ॥ ५ ॥ चैत्यसदनेषु-चैत्यगृहेषु स्वीकार ॥ ६ ॥ अप्रेक्षितादि-अप्रमार्जितादि आसनम् ॥ ७ ॥ सावद्याचरणायामादर ॥ ८ ॥ श्रुतपथस्य-सिद्धान्तमार्गस्य अवज्ञा-हीला ॥ ९ ॥ गुणिषु द्वेषधीः ॥ १० ॥ अत्र पथे-दशद्वारसयुक्ते चेद्-यदि धर्मः कर्महर. स्यात्तदा मेरुपर्वते 'अब्धौ तरेद्' इति निषेध वाक्य, कदापि न भवति ॥ ५ ॥

औद्देशिकभोजनद्वार व्याख्यानयति—

षट्कायानुपमर्द्य निर्दयमृषीनाधाय यत्साधित,
शास्त्रेषु प्रतिषिध्यते यदसकृन्निस्त्रिंशताऽऽधायि यत् ।
गोमासाद्युपम यदाहुरथ यद् भुक्त्वा यतिर्यात्यध ,
तत्को नाम जिघत्सतीह सघृण सङ्घादिभक्त विदन् ॥ ६ ॥

व्याख्या-षट्० ॥ षट्कायान्-पृथिव्यादीन् निर्दयम् उपमर्द्य-आरभ्य यद् आधाकर्म ऋषीन्-साधून् आधाय-मनस्यवधार्य साधित-निष्पादित यत् शास्त्रेषु असकृत्-वारवार प्रतिषिध्यते, यत्पुनर्निस्त्रिं(स्त्र)शताधायि-निस्त्रिंशतायाः-निःशूक-त्वस्य आधायि-कारक यद् गोमांसाद्युपम-गोमांसादितुल्यमाहुस्तीर्थकराः, अथ यद्-अशन भुक्त्वा यति. अध -नरके याति । एत्र दूषणस्थानमाधाकर्म तत् सङ्घादिनिमित्त मशन तदिति कोमलामन्त्रणे इह-जगति क सघृण -सदयो जिघित्सति-भोक्तुमिच्छति ? किं कुर्वन् ? विदन्-जानन्, एतावता ज्ञात्वा न कोऽपि भोक्तुमिच्छतीति ॥ ६ ॥

द्वितीयद्वारमाह--

गायद्गन्धर्वनृत्यत्पणरमणिरणद्वेणुगुञ्जन्मृदङ्ग,-
प्रेङ्खत्पुष्पस्रगुद्यन्मृगमदलसदुल्लोचचञ्चज्जनौघे ।
देवद्रव्योपभोगध्रुवमठपतिताऽऽशातनाभ्यस्त्रसन्तः,
सन्तः सद्भक्तियोग्ये न खलु जिनगृहेऽर्हन्मतज्ञा वसन्ति ॥ ७ ॥

व्याख्या-गाय० ॥ जिनगृहे अर्हत्चैत्ये अर्हन्मतज्ञा-अर्हन्मतज्ञातारः सन्तः खलु-निश्चितं न वसन्ति । कथम्भूते चैत्ये ? गायद्गन्धर्वाः गायन्तो गन्धर्वा यत्र, नृत्यन्ती पणरमणी-वेश्या यत्र, रणद्वेणुः-रणन्त-शब्दं कुर्वन्तो वेणवो-वंशा यत्र, गुञ्जन्तो मृदङ्गाः-मृदला यत्र तद् गुञ्जन्मृदङ्गं, प्रेङ्खत्पुष्पस्रक्-प्रेङ्खन्त्यो-लहलहाय-मानाः पुष्पस्रजः-पुष्पमाला यत्र, उद्यत्-समुच्छलद्गन्धो-मृगमदः-कस्तूरिका यत्र, लसन्तः दीप्यमानाः उल्लोचाः-चन्द्रोदया यत्र, चञ्चज्जनौघः-चञ्चन्तः-महाधनवस्त्रादि-भूषणभूषिता जनौघाः-श्रावकसङ्घा यत्र स सर्वपदैकघसमासः । चैत्ये एतत्सर्वं भवति । किम्भूताः सन्तः ? देव० देवद्रव्यस्योपभोगं ध्रुवं-निश्चितं या मठपतिता आशातना च ताम्बूलभक्षणशयनासनादिरूपा, ताभ्यः त्रसन्तः । कथम्भूते चैत्ये ? सद्भक्तियोग्ये, एतावता चैत्यभक्तिः कार्या, तत्र वासो न कार्यः ॥ ७ ॥

तृतीयद्वारमाह—

साक्षाज्जिनैर्गणधरैश्च निषेवितोक्तां, निस्सङ्गताऽग्रिमपदं मुनिपुङ्गवानाम् ।
शय्यातरोक्तिमनगारपदं च जानन्, विद्वेष्टि कः परगृहे वसतिं सकर्णः ॥ ८ ॥

व्याख्या—साक्षा० ॥ कः सकर्णः-विद्वान् परगृहे-श्रावकोपाश्रये वसतिं-स्थानं विद्वेष्टि-तत्र द्वेषं धत्ते अपितु न कोऽपि । कथम्भूतां वसतिं ? साक्षाज्जिनैः-तीर्थकरैः, गणधरैश्च-गौतमादिभिः निषेवितोक्तां-निषेविता-सेविता उक्ता च भव्येभ्यः । पुनः किम्भूतां वसतिं ? मुनिपुङ्गवानां-मुनिप्रवराणां निस्सङ्गताग्रिमपदं-निस्सङ्गताया अग्रिमं-प्रधानं पदं-स्थानं परगृहे वसतां साधूनां सङ्गोऽपि न स्यात् । सकर्णः किं कुर्वन् । शय्यातरोक्तिं शय्यया-वसत्या तरति संसारसागरमिति शय्यातरस्तस्य उक्तिः-कथनं, च पुनः-अनगारपदं, न विद्यते अगारं-गृहं यस्य सः अनगारस्तस्य पदं जानन्, एतावता अनगारस्य श्राद्धगृहे वसनमेव श्रेयः ॥ ८ ॥

पुनरपि तदुद्धारमेवाह—

चित्रोत्सर्गापवादे यदिह शिवपुरीदूतभूते निशीथे,
प्रागुक्ता भूरिभेदा गृहिगृहवसती कारणेऽपोद्य पश्चात् ।
स्त्रीसंसक्त्यादियुक्तेऽप्यभिहितयतनाकारिणं संयतानां,
सर्वत्रागारिधाम्नि न्ययमि न तु मतः क्वापि चैत्ये निवासः ॥ ९ ॥

व्याख्या–चित्रो० ॥ यत्–यस्मात्, इह–प्रवचने निशीथे–निशीथग्रन्थे निशीथनाम्नि छेदग्रन्थे सर्वत्र अगारधाम्नि–श्राद्धगृहे संयतानां–साधूनां निवासो न्ययमि–नियमेन प्रतिपादितः । कथम्भूते निशीथे ? चित्रोत्सर्गापवादे–चित्रौ–नाना प्रकारौ उत्सर्गापवादौ नयौ यत्र तत्, तत्र नयद्वयस्य विस्तरव्याख्याऽस्तीति । पुनः किम्भूते ? शिवपुरीदूतभूते–शिवपुर्याः–मोक्षनगर्या दूतभूते तत्र ग्रन्थे प्राक्–प्रथमं भूरिभेदाः–अनेकप्रकाराः गृहिगृहवसती –गृहिणां गृहमेव वसतयः–उपाश्रयास्ता उक्त्वा पश्चात्कारणे सति अपोद्य–अपवादविषयीकृत्य पूर्वमुत्सर्गेण ' स्त्रीसंसक्त्यादियुक्ते उपाश्रये न वस्तव्यं साधुना ' इत्युक्तं पश्चादपवादमार्गेण तत्र वसनीयमित्यपि प्रोक्तम् । कथम्भूते अगारधाम्नि ? स्त्रीसंसक्त्यादियुक्तेऽपि–स्त्रीपशुपण्डकानां संसर्गादि युक्तेऽपि वसनीयम् । कथम्भूतानां संयतानाम् ? अभिहित–यतनाकारिणाम्–अभि हिता–प्रोक्ता या यतना–परिच्छदादानरूपा तत्कारिणाम् । एवमुत्सर्गेण अपवादेनापि गृहस्थगृह एव वसनीयं न पुनः क्वापि चैत्ये निवासोऽनुमतः ॥ ९ ॥

प्रव्रज्याप्रतिपन्थिनं ननु धनस्वीकारमाहुर्जिनाः,
सर्वारम्भिपरिग्रहं त्वतिमहासावद्यमाचक्षते ।
चैत्यस्वीकरणे तु गर्हिततमं स्यान्माठपत्यं यते,–
रित्येवं व्रतवैरिणीति ममता युक्ता न मुक्त्यर्थिनाम् ॥ १० ॥

व्याख्या–प्रव्र० ॥ ननु–निश्चितं जिनाः–तीर्थङ्कराः धनस्वीकारम्–अर्थाङ्गीकारं प्रव्रज्याप्रतिपन्थिनं–दीक्षाविरोधिनम् आहुः–कथयन्ति तु–पुनः सर्वारम्भिपरिग्रहं, सर्वारम्भिणां–गृहस्थानां परिग्रहं–स्वीकारं ममैते गृहस्था इति, अतिमहासावद्यम्–अत्यन्तं महापापम् आचक्षते वदन्ति । तु–पुनः यतेः–साधोः चैत्यस्वीकरणे–चैत्यममत्वे गर्हिततमम्–अत्यन्तगर्हणीयं माठपत्यं–मठपतित्वं स्यात् । इत्येवंप्रकारेण मुक्त्यर्थिनां–

मुक्तेः प्रार्थकानां साधूनां ममता न युक्ता, कथम्भूता ममता ? व्रतवैरिणी, इति-अर्थ-गृहस्थचैत्यस्वीकारः । इति द्वारत्रयं व्याख्यातम् ॥ १० ॥

भवति नियतमत्रासंयमः स्याद्विभूषा, नृपतिककुदमेतल्लोकहासश्च भिक्षोः ।
स्फुटतर इह सङ्गः सातशीलत्वमुच्चै-रिति न खलु मुमुक्षोः संगतं गद्दिकाऽदि ॥ ११ ॥

व्याख्या—भवति० ॥ अत्र-गद्दिकाद्यासने नियतं-निश्चितम् असंयमो भवति गद्दिकादीनां प्रतिलेखयितुमशक्यत्वात् । विभूषा-शोभा स्यात् महापुरुषसेवनीयत्वात् । एतद्-आसनसेवनं नृपतिककुदं-राजचिह्नं च पुनः भिक्षोः-साधोः लोकहासः स्यात्-'अहो ! मुण्डितोऽप्येवंविधासनेषु उपविशति' इह गद्दिआसने संगपरिग्रहः स्फुटतरः-प्रकटतरः उच्चैः-अत्यर्थं सातशीलत्वं-सुखलम्पटत्वम् । इति हेतोः खलु-निश्चितं मुमुक्षोः-साधोः गद्दिकादि, आदिशब्दात् मसूरकसिंहासनादेः परिग्रहः, तत् न संगतं- न युक्तम् । अप्रेक्षिताद्यासनद्वारं व्याख्यातम् ॥ ११ ॥

सावद्याचरितद्वारमाह—

गृही नियतगच्छभाग् जिनगृहेऽधिकारो यतेः, प्रदेयमशनादि साधुषु यथा तथाऽऽरम्भिभिः ।
व्रतादिविधिवारणां सुविहितान्तिकेऽगारिणां, गतानुगतिकैरदः कथमसंस्तुतं प्रस्तुतं ॥ १२ ॥

व्याख्या—गृही० ॥ गृही-श्रावकः नियतगच्छभाक्, नियतं-निश्चितं स्वगच्छमेव भजतीति नियतगच्छभाक्, स्वगच्छं मुक्त्वाऽन्यत्र न गन्तव्यम्, यतेः-साधोः-जिनगृहे-चैत्येऽधिकारः-तच्चिन्ताकरणं 'प्रदेयमशनादी' त्यादि, आरम्भिभिः-गृहस्थैः साधुषु अशनादि-अशनपानखादिमस्वादिमादि यथातथा-येन तेनापि प्रकारेण प्रदेयं तत्राशुद्धदानेऽपि दोषो न अगारिणां-गृहस्थानां सुविहितान्तिके-साधुसमीपे व्रतादि-विधिवारणं साधुसमीपे शीलव्रतादि नाङ्गीकरणीयं गतानुगतिकैः-एडकावत्प्रवाहपतितैः चैत्यवासिभिः अदः-पूर्वोक्तम् असंस्तुतम्-अयुक्तं कथं-केन प्रकारेण प्रस्तुतं-प्रारब्धम् ॥ १२ ॥

श्रुतपथावज्ञाद्वारमाह—

निर्वाहार्थिनमुज्झितं गुणलवैरज्ञातशीलान्वयं,
तादृग् वंशजतद्गुणेन गुरुणा स्वार्थाय मुण्डीकृतम् ।
यद्विख्यातगुणान्वया अपि जना लग्नोग्रगच्छग्रहा,-
देवेभ्योऽधिकमर्चयन्ति महतो मोहस्य तज्जृम्भितम् ॥ १३ ॥

व्याख्या—निर्वाहा० ॥ यत्-यस्मात्कारणात् एवंविधा जना एवंविध गुरु देवेभ्योऽधिकमर्चयन्ति तत् महत.-प्रबलस्य मोहस्य-मोहनीयकर्मणो जृम्भित-महात्म्यम् । कथम्भूत गुरु ? निर्वाहार्थिन-निर्वाहस्य-उदरभरणस्यार्थिनम् । पुनः किम्भूतम्? गुणलवै.-गुणलेशैः उज्झित-त्यक्तम् । पुन किम्भूतम् ? अज्ञातशीलान्वयम्-अज्ञात शीलम्-आचार. अन्वयश्च-कुल यस्य स (तम् ।) पुन' किम्भूतम् ? तादग्गुणज तद्गुणेन गुरुणा शिष्यतुल्याज्ञातादिवशेन तद्गुणेन-शिष्यतुल्यगुणेन एवंविधेन गुरुणा स्वा र्थाय-स्वोदरभरणाय मुण्डीकृत तादृशतादृशमेव मुण्डयते । कथम्भूता जना. विख्यात गुणान्वया अपि विख्याता'-प्रसिद्धा' गुणान्वयो यशो येषा ते सगुणाः-सुकुलोत्पन्ना अपि । पुन किम्भूता' ? लग्नोग्रगच्छग्रहा', लग्न उग्रः-उत्कटो गच्छग्रहो येषा ते ॥ १३ ॥

पुनरप्येतदुद्धारमाह—

दुष्प्रापा गुरुकर्मसञ्चयवता सद्धर्मबुद्धिर्नृणा,
जातायामपि दुर्लभ शुभगुरु प्राप्त स पुण्येन चेत् ।
कर्तुं न स्वहित तथाऽप्यलममी गच्छस्थितिव्याहता ,
क ब्रूम कमिहाश्रयेमहि कमाराध्येम किं कुर्महे ॥ १४ ॥

व्याख्या— दुष्प्रापा० ॥ गुरुकर्मसञ्चयवता-गुरुकर्मसमूहवता नृणा सद्धर्म बुद्धिः-प्रधानधर्मबुद्धिः दुष्प्रापा गुरुकर्मत्वात् सद्धर्मबुद्धिर्न कदाचित् सद्धर्मबुद्धौ जाता यामपि पुनरपि शुभगुरु' दुर्लभः-दुष्प्राप. चेद्-यदि स गुरुः पुण्येन प्राप्तः, तथापि-एव सामग्रीयोगेऽपि अमी श्राद्धा' स्वहित कर्तुं नाल-न समर्थाः । कथम्भूता जनाः ? गच्छस्थितिव्याहता -गच्छस्थित्या-गच्छमर्यादया व्याहता'-वशीकृताः । एव स्थिते क पुरुष ब्रूम , क पुरुषम् इह-जगति आश्रयमहि-शरण प्रपद्येमहि, क पुरुषम् आराध्येमहि-आराध्याम' किं कुर्महे ॥ १४ ॥

क्षुत्क्षाम किल कोऽपि रङ्कशिशुक प्रव्रज्य चैत्ये क्वचित्,
कृत्वा कञ्चन पक्षमक्षितकलि प्राप्तस्तदाचार्यकम् ।
चित्र चैत्यगृहे गृही यति निजे गच्छे कुटुम्बीयति,
स्व शक्रीयति बालिशीयति बुधान् विश्व वराकीयति ॥ १५ ॥

व्याख्या—क्षुत्क्षाम० ॥ किलेति सभावनायां कोऽपि क्षुत्क्षामः-क्षुधया क्षाम -क्षीण. क्षुत्क्षाम एवम्भूतो रङ्कशिशुक -रङ्कस्यबाल. स वैराग्याभावेऽपि क्वचित्

जिनगृहे चैत्ये प्रव्रज्य-दीक्षां गृहीत्वा ततः कञ्चन पुरुषं पक्षं-स्ववशं कृत्वा क्रमेण तद् आचार्यकम्-आचार्यत्वं प्राप्तः। कथम्भूतः सः? अक्षितकलिः-अक्षितः-अनिष्टः कलिः-कलहो यस्य स कलहयुक्तः। एतत् चित्रम्-आश्चर्यं स आचार्यपदवीप्राप्तो निर्गुणोऽपि चैत्यगृहे गृहीयति-'ममेदं चैत्य'-मिति गृहस्थवदाचरति। निजे गच्छे कुटुम्बीयति-कुटुम्बिपुरुषवदाचरति। स्वम्-आत्मानं शक्रीयति-शक्रवत्-इन्द्रवदाचरति। बुधान्-पण्डितान् बालिशीयति-मूर्खीयति। विश्वं-जगत्, वराकीयति-वराकवदाचरति चैत्यवासिषु एतत् साक्षाद् दृश्यते ॥ १५ ॥

पुनरपि श्रुतपथावज्ञाद्वारमाह—

> यैर्जातो न च वर्द्धितो न च न च क्रीतोऽधमर्णो न च,
>
> प्रागृहृष्टो न च बान्धवो न च न च प्रेयान्न च प्रीणितः।
>
> तैरेवात्यधमाधमैः कृतमुनिव्याजैर्बलाद् वाह्यते,
>
> न स्योतःपशुवज्जनोऽयमनिशं नीराजकं हा! जगत् ॥ १६ ॥

व्याख्या—यैर्जातो० ॥ यैः-शिथिलाचारिगुरुभिः अयं जनः-श्राद्धलोकः पितृरूपेण तेन न जनितः-जन्म प्रापितः, च पुनः वर्द्धितः-वृद्धिं नीतः, न क्रीतः-मूल्येन गृहीतः, न च येषां गुरूणाम् अधमर्णः-अर्थदाता, न च ग्राहकस्तु उत्तमर्णः, प्राक् प्रथमं दृष्टः-विलोकितः, न च तेषां बान्धवः-भ्राता, न च प्रेयान्-वल्लभः, न च यैर्गुरुभिः प्रीणितः-अर्थादिप्रदानेन सन्तोषितः, न च तैरेव गुरुभिः अनिशं-निरन्तरम् अयं जनः बलात्-हठात् नस्योतः पशुवत्-नस्तित वृषभवत् वाह्यते-इतस्ततो भ्राम्यते। कथम्भूतस्तैः? अत्यधमाधमैः-अति अत्यर्थम् अधमेभ्योऽधमाः। पुनः कथम्भूतैः? कृत-मुनिव्याजैः-विहितमुनिकपटैः, अत एव 'हा!' इति खेदे जगत् नीराजकम्-अधिपतिवियुक्तं, यस्याग्रे पूत्क्रियते स राजा नास्तीति ॥ १६ ॥

> किं दिङ्मोहमिताः किमन्ध-बधिराः किं योगचूर्णीकृताः,
>
> किं दैवोपहताः किमङ्ग! ठकिताः किं वा ग्रहावेशिताः।
>
> कृत्वा मूर्द्धिपदं श्रुतस्य यदमी दृष्टोरुदोषा अपि,
>
> व्यावृत्तिं कुपथाज्जडा न दधतेऽसूयन्ति चैतत्कृते ॥ १७ ॥

व्याख्या—किं दिङ्मोहा० ॥ अमी जडाः-मूर्खाः किं दिङ्मोहं-दिशाभ्रमम् इताः-प्राप्ताः? । किम् अन्धबधिराः-अन्धाश्च बधिराश्च, श्रवणविकलः पादविप्रलेपादि-

योग', अञ्जनादि चूर्णं, योगचूर्णकृता'—मस्तकादिषु योगचूर्णप्रक्षेपेण वशीकृताः ?, किं देवोपहताः—देवेन—प्रतिकूलदेवेन किमुपहताः ?, किमङ्ग ठकिता'—' अङ्गे 'ति कोमलामन्त्रणे किं ठकिताः—धूर्तेन च वञ्चिताः ? । किं वा ग्रहावेशिता: ?, ग्रहै'—व्यन्तरादिभिः आवेशिताः—अधिष्ठिताः ? । एते तत्त्व न जानन्तीति दृष्टान्तः । यतः—यस्मात् अमी जडाः कुपथात्—कुमार्गाद् व्यावृत्ति—निवृत्तिं न दधते—न कुर्वन्ति । किं कृत्वा ? श्रुतस्य—सिद्धान्तस्य मूर्ध्नि—मस्तके पद—पाद कृत्वा—सिद्धान्तोक्तमविगणय्येत्यर्थः । कथम्भूता जडा' ? दृष्टोरुदोषा अपि, दृष्टा उरव —गरिष्ठा दोषा यैस्ते, प्रत्यक्षतो दोषान् पश्यमाना कुमार्गनिवृत्तिं न कुर्वन्ति अत एव दिङ्मोहादिविशेषणम् । च—पुनः एवत्कृते—कुपथव्यावृत्तिकृते पुरुषा ये असूयन्ति—ईर्ष्यां कुर्वन्ति, स्वय कुपथव्यावृत्तिं न कुर्वन्ति, ये कुर्वन्ति तेभ्यो जडा असूयन्तीति विशेषणमफलता ॥ १७ ॥

श्रुतपथावज्ञाद्वारमाह—

इष्टावाप्तितुष्टनटविटभटचेटकपेटकाकुलं,
निधुवनविधिनिबद्धदोहदनरनारीनिकरसङ्कुलम् ।
रागद्वेषमत्सरेर्ष्यो घनमघपङ्के निमज्जनं,
जनयत्येव मूढजनविहितमविधिना जैनमज्जनम् ॥ १८ ॥

व्याख्या—इष्टावाप्ति० ॥ अविधिना—अविधिप्रकारेण रात्रौ इत्यर्थः, मूढजनविहित—मूर्खलोककृत जैनमज्जन—तीर्थकरस्नात्रम् अघपङ्के निमज्जन—पापपङ्के ब्रुडन जनयत्येव—करोत्येव । एवकारो निश्चयार्थे । किम्भूत रात्रिस्नानम् ? इष्टावाप्तितुष्टविटनटभटचेटकपेटकाकुलम्—इष्टा—वल्लभा स्त्री रात्रावागता तस्या अवाप्तिः—प्राप्तिस्तया तुष्टा'—सन्तुष्टा ये विटा—वेश्यापतय, नटा —नाटकिन, भटा'—सुभटाः, चेटकाः—दासास्तेषां पेटक—समुदायस्तेन आकुलम्, रात्रौ प्रायस्ते समागच्छन्ति । पुन किम्भूत ? निधुवनविधि निधुवन—मैथुन तस्य विधिः—विलसित, तत्र निबद्ध—कृतो दोहद—अभिलाषो येन तत् । एवंविध नरनारीनिकर—मनुष्यस्त्रीवृन्द तेन सङ्कुल—व्याप्तम् । पुन किम्भूत ? रागद्वेषमत्सरेर्ष्याघन, रागः—स्नेह',—द्वेष'—रोष , मत्सर'—क्रोधविशेषः, परगुणासहिष्णुता—ईर्ष्या—स्ववल्लभा परेण जल्पन्तीं दृष्ट्वा सोपकरण, तैर्घन—निबिड बहुरूपादिविटादिसमर्दाद् रात्रौ निषिद्ध मज्जनस्नात्र बहुमज्जनप्रवृत्तित्वाच ॥ १८ ॥

जिनमतविमुखविहितमहिताय न मज्जनमेव केवलं,
किन्तु तपश्चरित्र-दानाद्यपि जनयति न खलु शिवफलम ।
अविधि-विधिक्रमाज्जिनाज्ञापि ह्यशुभ-शुभाय जायते,
किं पुनरिति विडम्बनैवाहितहेतुर्न प्रतायते ॥ १९ ॥

व्याख्या-जिन० ॥ मज्जनमेव-स्नात्रमेव जिनमतविमुखविहितं-जिनमतात्-भगवन्मतात् विमुखं-विपरीतम् अविधितया विहितं-कृतं केवलं-निकेवलम् अहिताय न किन्तु तपश्चरित्रदानाद्यपि-तपः-अनशनादि, चारित्रं-देशसर्वविरतिरूपं, दानम्-अभयादिरूपम्, आदिशब्दाद् विनयवैयावृत्त्यादिग्रहणं, तदपि अविधिकृतं खलु-निश्चितं शिवफलं-मुक्तिफलं न जनयति, हि-निश्चितं जिनाज्ञाऽपि-भगवदाज्ञापि अविधिविधिक्रमात्-अविधिश्च विधिश्च तयोः क्रमात् अशुभशुभाय जायते-भवति, अविधिना अशुभाय, विधिना शुभाय किं पुनरिति विडम्बनैवाहितहेतुर्न प्रतायते, इत्यमुना प्रकारेणाऽविधिक्रियाविडम्बना एवाहितहेतुअहितस्य संसारस्य हेतुः कारणं किं पुनः न प्रतायते न विस्तार्यते अपितु विस्तार्यत एव एतावता अविधिक्रिया विडंबना एव अहितहेतुश्च कथ्यत एव ॥ १९ ॥

जिनगृह-जिनबिम्ब-जिनपूजन-जिनयात्रादि विधिकृतं,
दानतपोव्रतादिगुरुभक्तिश्रुतपठनादि चादृतम ।
स्यादिह कुमतकुगुरुकुग्राहकुबोधदेशनांशतः,
स्फुटमनभिमतकारित वरभोजनमिव विपलवनिवेशतः ॥ २० ॥

व्याख्या-जिन० ॥ जिनगृहं-जिनभवनं, जिनबिम्बं-भगवत्प्रतिमा, जिनपूजनं-भगवत्पूजा, जिनयात्रा-अष्टाह्निकादिमहोत्सवः, आदिशब्दाज्जिनप्रतिष्ठादिग्रहः, एवं धर्मकृत्यं विधिकृतं-शास्त्रोक्तप्रकारेण विहितं दानम्-अभयदानादि, तपः-द्वादशप्रकारं, व्रतानि-स्थूलप्राणातिपातविरमणानि, आदिशब्दात् अभिग्रहादिः, गुरुभक्तिः-धर्माचार्यभक्तिः, श्रुतपठनं-सिद्धान्तपठनम्, आदिशब्दात् सिद्धान्तार्थश्रवणादिग्रहणं, च पुनः आदृतम्-आदरेण कृतम्, एमतत्सर्वम् इह-प्रवचने कुमत-कुगुरु-कुग्राह-कुबोध-कुदेशनांशतः-कुमतं-परतीर्थिकमतं, कुगुरुः-सिद्धान्तार्थमोटकः, कुग्राहः-कदाग्रहः, कुबोधः-कुत्सितज्ञानं, कुदेशना-कुधर्मकथा तासाम् अंशः-लेशस्तस्मात्, स्फुटं-प्रकटम्, अनभिमतकारि-अनिष्टकारि संसारकारणं स्यात् । दृष्टान्तमाह-विपलवनिवेशतो वर-

भोजनमिव, यथा विषलवप्रवेशेण परमोन्नं-प्रधान भोजनमपि अनिष्टकारि तथा विधि धर्मकृत्यमपि कुमतिकुगुर्वादिदेशनामिश्रित संसारकारणमिति ॥ २० ॥

आकृष्टु मुग्ध-मीनान् बडिशपिशितवद्विम्बमादर्श्य जैन,
तन्नाम्ना रम्यरूपानपवर-कमठान् स्वेष्टसिद्ध्यै विधाप्य ।
यात्रा-स्नात्राद्युपायैर्नमसितक-निशाजागरादिच्छलैश्च,
श्रद्धालुर्नाम जैनैश्छलित इव शठैर्वञ्च्यते हा ! जनोऽयम् ॥ २१ ॥

व्याख्या-आकृष्टु० ॥ नाम जैनैः-नाममात्रेण जैना नामजैनास्तैः-लिङ्ग धारिभिः 'हा' इति खेदे अय श्रद्धालुर्जनः-श्रावकजनो वञ्च्यते-पराभूयते । कथम्भूत नामजैनैः ? शठैः-धूर्त्तैः । कथम्भूतः श्रद्धालुः ? छलित इव-व्यन्तराधिष्ठित इव ग्रथिल इव । छलनप्रकारमाह-मुग्धमीनान्-मूर्खमत्स्यान् आकृष्टु-आकर्षितु बडिशपिशितवत्-बडिश-मत्स्यग्रहणाय लोहकण्टकः, तत्रपिशित-मांसपोटकः तद्वत् जैन बिम्ब-जिनप्रतिमा आदर्श्य-दर्शयित्वा, यथा, मांसखण्डेन मत्स्या वशीक्रियन्ते तथा मुग्धप्रतारणाय तैरपि जैनबिम्ब दर्शितम् । ननु जिनबिम्बस्य कथ बडिशपिशितोपमा ? उच्यते-अविधि प्ररूपितस्य हीनाचारिप्रतिष्ठितस्य युक्तैव न तु विधिप्रतिष्ठितस्य । पुनः किं कृत्वा ? तन्नाम्ना-जिननाम्ना रम्यरूपान्-मनोहरस्वरूपान् अपवरकमठान्, अपवरकाः-अन्त र्निलया मठाः-स्थानविशेषास्तान् विधाप्य-कारयित्वा, कस्यै ? स्वेष्टसिद्ध्यै-स्वस्वेष्टसाध नाय, 'अस्माकमिष्ट भविष्यता'-मिति मिषेण भगवद्भाण्डागारमठादिनिर्मापण कारयन्ति । ते पुनः कैः श्राद्धान् छलन्ति ? यात्रास्नात्राद्युपायैः, यात्रा-पूर्वजाद्युद्देशेन जिनगृहे यात्रा स्नात्र च कर्त्तव्यम्, आदिशब्दात् श्रुतानुक्तपर्वग्रहः, एवप्रकार उपायः-मिषः, तैः । पुनः नमसितकनिशाजागरादिच्छलैश्च, नमसितकजिनादीन् उद्दिश्य द्रव्ये सितस्तरकरणम् उपद्रवनिवृत्तये इयद् द्रव्य व्ययामीति नियमाकरण निशाजागरो-रात्रि-जागरणम् आदिशब्दात् शान्तिकपौष्टिकादिग्रहः, एतच्छलैश्च-एतत्प्रकार दर्शयित्वा जनान् वञ्चयन्ति । अनेन काव्येन अविधिजिनबिम्बयात्रास्नात्रनमसितकनिशाजागरण निषिद्ध, विधिना तु सर्व कर्त्तव्य, तत्कर्त्तव्यस्य सप्तमकाव्ये विंशतितमकाव्ये पूर्वोक्ते स्थापितत्वादिति ॥ २१ ॥

सर्वत्रात्मगिताश्रवाः स्वविषयव्यासक्तसर्वेन्द्रिया,
वल्गद्गौरवपण्ठदुष्टतुरगा पुष्यत्कषायोरगा ।

सर्वाकृत्यकृतोऽपि कष्टमधुनान्त्याश्चर्यराजाश्रिताः,
स्थित्वा सन्मुनिमूर्द्धसूद्धतधियस्तुष्यन्ति पुष्यन्ति च ॥ २२ ॥

व्याख्या–सर्व० ॥ अहो ! कष्टं एवंविधा हीनाचारिणोऽधुना सन्मुनिमूर्धसु–सत्साधुमस्तकेषु स्थित्वा तुष्यन्ति–तोषं प्राप्नुवन्ति, च पुनः पुष्यन्ति–वर्द्धन्ते । कथम्भूताः ( हीनाचारिणः ) ? सर्वत्र अस्थगितास्रवाः–अनाच्छादितास्रवाः । पुनः किम्भूताः ? स्वविषयेषु–आत्मात्मविषयेषु व्यासक्तानि–व्यापारितानि सर्वेन्द्रियाणि–स्पर्शनादीनि यैस्तैः । पुनः किम्भूताः ? वलगन्तः–उच्छलन्तः गौरवैः शातादिभिः चण्डा–रौद्रा दण्डा–मनोदण्डादिकास्तुरगा येषां ते दण्डानां चपलत्वात्तुरगोपमानम् । पुनः कथम्भूताः ? पुष्यत्कषायोरगाः, पुष्यन्तः–प्रवर्धमानाः कषायोरगाः–कषायसर्पा येषां ते । पुनः किम्भूताः ? सर्वाकृत्यकृत्योऽपि–सर्वाकार्यकारका अपि । पुनः किम्भूताः ? अन्त्याश्चर्य राजाश्रिताः, अन्त्यमाश्चर्यम्–असंयतपूजालक्षणं तदेव राजा तदाश्रिताः । पुनः किम्भूताः ? उद्धतधियः–उत्कटबुद्धयः ॥ २२ ॥

सर्वारम्भपरिग्रहस्य गृहिणोऽप्येकाशनाद्येकदा,
प्रत्याख्याय न रक्षितो हृदि भवेत्तीव्रोऽनुतापस्तदा ।
षट्कृत्वस्त्रिविधं त्रिधेत्यनुदिनं प्रोच्यापि भञ्जन्ति ये,
तेषां तु क्व तपः क्व सत्यवचनं क्व ज्ञानिता क्व व्रतम् ? ॥ २३ ॥

व्याख्या–सर्वा० ॥ सर्वारम्भपरिग्रहस्य–सकलसावद्यव्यापारधनधान्यादिसङ्ग्रहतत्परस्य गृहिणोऽपि–गृहस्थस्य एकाशनादि–एकवारमशनं यत्तत् एकाशनं तदादिर्यस्य तत् एकाशनादि, आदिशब्दात् निर्विकृतिकादि प्रत्याख्यातम् एकदा–पर्वादिदिवसे प्रत्याख्याय–कृत्वा कदाचिद् विस्मरणेन न रक्षितस्तस्य रक्षणं न कृतं चेद् भङ्गः स्यात्तदा हृदि तीव्रोऽनुतापः–पश्चात्तापो भवेत्–'अहो ! मया मन्दभाग्येन प्रत्याख्यानं भग्नम्' । ये हीनाचारिणः षट्कृत्वः–षड्वारान् त्रिवारं–सन्ध्याप्रतिक्रमणे त्रिवारं प्रातः प्रतिक्रमणे इति त्रिविधं, त्रिधा–मनोवाक्कायैः–करणकारणानुमतिवर्जनेनेति, अनुदिनं–निरन्तरं प्रोच्य–मुखे उच्चार्यापि भञ्जन्ति तेषां तपः क्व ?, सत्यवचनं क्व ?, ज्ञानिता क्व ?, व्रतं क्व ? अपि तु न कथञ्चित् ॥ २३ ॥

देवार्थव्ययतो यथारुचिकृते सर्वर्तुरम्ये मठे,
नित्यस्थाः शुचिपट्टतूलशयनाः सद्गण्डिकाद्यासनाः ।

सारम्भा सपरिग्रहा सविषया सेर्ष्या सकाङ्क्षा, सदा,
साधुव्याजविटा अहो ! सितपटा कष्टं चरन्ति व्रतम् ॥ २४ ॥

व्याख्या—देवा० ॥ अहो ! इति आश्चर्ये सितपटाः-श्वेताम्बराः व्रतं कष्ट-दुःखतया चरन्ति-समाचरन्ति। किम्भूताः ? मठे-स्वस्थाने नित्यस्थाः-नित्यवासिनः। कथम्भूते मठे ? देवार्थव्ययतः-देवद्रव्यव्ययाद् यथारुचिकृते-स्वेच्छया विरचिते, ते स्वेच्छाचारिणो देवद्रव्यं स्वस्थानेषु लगयन्ति । पुनः कथम्भूते ? सर्वर्तुरम्ये-अनेक-जालिकागवाक्षादिकरणे षड्ऋतुमनोहरे । पुनः किम्भूतास्ते ? शुचयः-पवित्रा याः पट्टतूल्यो-हंसरुतादिमयाः शय्याविशेषास्तत्र शयनाः । पुन. किम्भूताः ? सद्गन्धिका धासना-प्रधानगन्धिकवासना', आदिशब्दान्मद्धरकादिग्रहः । पुनः किम्भूताः ? सारम्भाः-आरम्भसहिताः । पुनः किम्भूताः ? सपरिग्रहाः-परिग्रहेण सहिताः, पुनः किम्भूताः ? सविषयाः विषयः पञ्चप्रकारस्तेन सहिता' । पुनः सेर्ष्याः, सहईर्ष्यया वर्त्तन्त इति सेर्ष्या. । पुनः किम्भूताः ? सदा-निरन्तरं सकाङ्क्षा', सहकाङ्क्षया-द्रव्यादि-वाञ्छया वर्त्तते ये ते सकाङ्क्षाः । पुनः साधुव्याजेन-साधुच्छलेन विटाः-लम्पटा इव, दुराचारदर्शनेन तेषां निन्दनम् ॥ २४ ॥

'इत्याद्युद्धतसोपहासवचसः स्युः प्रेक्ष्य लोकाः स्थितिं,
श्रुत्वाऽन्येऽभिमुखा अपि श्रुतपथाद् वैमुख्यमातन्वते ।
मिथ्योक्त्या सुदृशोऽपि बिभ्रति मनः सन्देहदोलाचलं,
येषां ते ननु सर्वथाजिनपथप्रत्यर्थिनोऽमी ततः ॥ २५ ॥

व्याख्या—इत्या० ॥ लोका.-परतीर्थिकादयः स्थितिं-हीनाचारिसामाचारी प्रेक्ष्य-विलोक्य इत्याद्युद्धतसोपहासवचसः, इत्यादिपूर्वोक्तनिंदादिप्रकारेण उद्धतानि-उत्कटानि सोपहासानि-हास्यसहितानि वचांसि येषां ते, एवंविधाः स्युः-भवेयुः, हास्यं कुर्वन्तीत्यर्थः । अन्ये केचन तेषामाचारं श्रुत्वा अभिमुखा -सन्मुखा वाऽपि श्रुतपथात्-सिद्धान्तमार्गात् वैमुख्य-पराङ्मुखत्वम् आतन्वते-भजन्ते। येषां हीनाचारिणां मिथ्यो क्त्या-मिथ्याभाषणेन अहो ! अमी अन्यथावादिनोऽन्यथाकारिणः, इतिरूपेण सुदृशोऽपि-सम्यग्दृशोऽपि पुरुषाः मनःसन्देहदोलाचलं बिभ्रति-धारयन्ति, सन्देह एव दोला तया चलम्, 'इदं सत्यमिदं वा सत्यं'-मिति सन्देहास्पदं मनः स्यात्, ननु-निश्चितं तेऽमी-चैत्यवासिनः ततः-तस्मात्सर्वथा जिनमतप्रत्यर्थिनः-जिनमतवैरिणः ॥ २५ ॥

सर्वैरुत्कटकालकूटपटलैः सर्वैरपुण्योच्चयैः,
सर्वैर्व्यालकुलैः समस्तविधुराधि-व्याधि-दुष्टग्रहैः ।
नूनं क्रूरमकारि मानसममुं दुर्मार्गमासेदुषां,
दौरात्म्येन निजव्नुषां जिनपथं वाचैषसेत्यूचुषाम् अतः ॥ २६ ॥

व्याख्या-सर्वै० ॥ अमु-प्रसिद्धं चैत्यवासिविहितं दुर्मार्गम् आसेदुषां-सेव्यमानानां मानसं-चित्तं नूनं-निश्चितं क्रूरम् अकारि-कृतम् । कैः क्रूरं कृतं ? तत्राह-सर्वैरुत्कटकालकूटपटलैः-अत्युग्रसद्योघातिविषसमूहैः, सर्वैः-समस्तैः अपुण्योच्चयैः-पापराशिभिः । पुनः सर्वैर्व्यालकुलैः-समस्ताशीविषसमूहैः । पुनः समस्तविधुराधि-व्याधिदुष्टग्रहैः, सर्वं विधुरं-कष्टम्, आधिः-मानसी पीडा, व्याधिः-रोगः दुष्टग्रहास्तैः । एतैः पुद्गलैर्महादुष्टं तेषां मनः कृतम् । कथम्भूतानां तेषां ? दौरात्म्येन-दुष्टात्म्यत्वेन जिनपथं-जिनमार्गं निजघ्नुषाम्-उच्छेत्तुकामानाम् । पुनःकिम्भूतानां ? वाचा-वाण्या 'एष यः स मार्गः' इत्यूषां-कथयितॄणां दुर्मार्गमपि सुमार्गतया प्ररूपकाणामिति ॥ 'अतः' इति भिन्नपदम्-अस्मात्कारणात् ॥ २६ ॥

तत्र कारणमाह—

दुर्भेदस्फुरदुग्रकुग्रहतमःस्तोमास्तधी चक्षुषां,
सिद्धान्तद्विषतां निरन्तरमहामोहादहम्मानिनाम् ।
नष्टानां स्वयमन्यनाशनकृते बद्धोद्यमानां सदा,
मिथ्याचारवतां वचांसि कुरुते कर्णे सकर्णः कथम् ॥ २७ ॥

व्याख्या-दुर्भेद० ॥ मिथ्याचारवतां मिथ्या-विपरीत आचारो येषां ते मिथ्याचारवंतस्तेषां हीनाचारिणां वचांसि-वाक्यानि सकर्णो-विद्वान् कर्णे कथं केन प्रकारेण कुरुते अपितु हीनाचारि धर्मोपदेशवाक्यमपि न श्रोतव्यं कथंभूतानां दुर्भेद० दुर्भेदो-दुरुच्छेदः स्फुरन्-दीप्त उग्र-उत्कटो यः कुग्रहः-कदाग्रहः सएव तमस्तमोऽधंकार-पटलं तेन अस्तं आच्छादितं धीचक्षु-ज्ञानलोचनं येषां ते । पुनः कथंभूतानां सिद्धांत-द्विषतां-सिद्धांतवैरिणां पुनः कथं भूतानां निरंतरमहामोहान्-निरंतरमहामोहनीय-कर्मणः सकाशात् अहंमानिनां-अभिमानवतां पुनः किं स्वयमात्मनानष्टानां-भ्रष्टानां पुनः कथंभूतानां सदा अन्य नाशनकृतेऽन्यभ्रंशकराय बद्धोद्यमानां-कृतोद्यमानां स्वयं नष्टोऽन्यान्नाशयति इति अतएव तेषां वचो न श्रोतव्यमिति ॥ २७ ॥

यत्किञ्चिद्वितथ यदप्यनुचित यल्लोकलोकोत्तरो-
त्तीर्णं यद् भवहेतुरेव भविना यच्छास्त्रबाधाकरम् ।
तत्तद्धर्म इति ब्रुवन्ति कुधियो मूढास्तदर्हन्मत,-
भ्रान्त्या लान्ति च हा ! दुरन्तदशमाश्चर्यस्य विस्फूर्जितम् ॥ २८ ॥

व्याख्या—यत्किञ्चि० ॥ कुधिय:-कुपण्डितास्तत्तत् वस्तुधर्मरूपतया ब्रुवति, तत्किं ? यत् किं तत्राह-य किंचित वितथ अलीक श्रेणिकराजरजोहरणवदनादि यदपि अनुचितं अयोग्य पित्राद्युद्देशेन यात्राकरणादि अथवा जिनमदिरे लकुडक्रीडादिअयोग्य, यत् लोकलोकोत्तरोत्तीर्ण-लोकलोकोत्तरमार्गात उत्तीर्णं बाह्य सूतकगृहे भिक्षाग्रहणादि-रजस्वलापूजा, हीनजातिभ्य. परमेष्ठिमन्त्रपाठन दीक्षण जैनेन्द्रप्रतिमाकारण च, तथा यद् भविनां-भव्याना भवहेतु:-ससारहेतु' । एव निश्चयेन जिनमन्दिरे जलक्रीडादि यत् शास्त्रस्य बाधाकर-सिद्धान्तविरुद्धम् आधाकर्मभोजनादि । अथ श्रावणाधिक्ये पर्युषणाया अशीतितमेऽह्नि विधानम्, इत्यादि धर्मतया प्ररूपयन्ति मूढा.-मूर्खास्तद् अर्हन्मतभ्रान्त्या-भगवन्मतभ्रमेण लान्ति-स्वीकुर्वन्ति शुक्तिशकले रजतवत् । 'हा' इति खेदे दुरन्तदशमाश्चर्यस्य-दुष्टासयतपूजालक्षणस्य विस्फूर्जित-विलसित पश्यतेति ॥२८॥

कष्ट नष्टदिशा नृणा यददृशा जात्यन्धवैदेशिक,
कान्तारे प्रदिशत्यभीप्सितपुराध्वान किलोत्कन्धर ।
एतत्कष्टतर तु सोऽपि सुदृश सन्मार्गगास्तद्विद,-
स्तद्वाक्यानुवर्तिनो हसति यत्साबज्ञमज्ञानि च ॥ २९ ॥

व्याख्या—कष्ट० ॥ यस्मात्कारणात् किलेति सत्येन नृणां-मनुष्याणा जात्यन्धवैदेशिक, जात्या-जन्मना अन्ध -नेत्रविकल, स चासौ वैदेशिक:-विदेशोत्पन्न' । एवम्भूत: कश्चित् कान्तारे-अटव्याम् अभीप्सितपुराध्वानम्, अभीप्सितस्य-इष्टस्य पुरस्य अध्वान-मार्गं प्रदिशति दर्शयति तत्कष्टम् । कथम्भूताना नृणा ? नष्टदिशा-दिङ्मूढानाम् । पुन: कथम्भूताम् ? अदृशा-दृष्टिविकलानामन्धा-नाम् कथम्भूतो जात्यन्धवैदेशिक: ? उत्कन्धर:-ऊर्ध्वीकृतग्रीव', यो मार्गं दर्शयति स ग्रीवामूर्ध्वी करोति । तु-पुन: एतत् कष्टतरम्-अतिशयेन कष्ट, तत्राह-सोऽपि जात्यन्ध वैदेशिक: यत्-यस्मात सुदृश -सुनेत्रान् पुरुषान् हसति तत्कष्टतरम् । कथम्भूतान् सुदृश: ? सन्मार्गगान्-शोभनमार्गगमनशीलान् । पुन: कथम्भूतान् ? तद्विद'-शोभनमार्गगमन ज्ञातॄन् पुन: कथम्भूतान् ? तद्वाक्यानुवर्तिन:, तद्वाक्य-जात्यन्धवाक्ये अनुवर्तिन'-

न प्रवर्त्तकास्तान्। कथं हसति? तत्राह—सावज्ञं–साहङ्कारम् अज्ञानिव–मूर्खानिव, यथा अज्ञा हसन्ति तथा सोऽपि हसति–अहो! मद्वाक्येन गच्छति। एतत्तु कष्टतरं यत्तस्य मार्गदर्शनं तत्तु कष्टम्॥ २९॥

सैषा हुण्डावसर्पिण्यनुसमयहसद्भव्यभावानुभावा,–
त्रिंशश्चोग्रग्रहोऽयं खखनखमितवर्षस्थितिर्भस्मराशिः।
अन्त्यं चाश्चर्यमेतज्जिनमतहतये तत्समा दुष्षमा चे,–
त्येवं दुष्टेषु पुष्टेष्वनुकलमधुना दुर्लभो जैनमार्गः॥ ३०॥

व्याख्या—सैषा०॥ सा एषा–प्रत्यक्षा हुण्डावसर्पिणी–हुण्डसंस्थानेन सहिताऽवसर्पिणी–एतत्कालः। कथम्भूता? अनुसमयहसद्भव्यभावानुभावा, अनुसमयं–प्रतिसमयं हसन्तः–हीयमानाः भव्याः–प्रधानाः, भावाः–पदार्थास्तेषामनुभावः–प्रभावो यस्यां सा–अनुसमयहसद्भव्यभावानुभावा। च–पुनः त्रिंशः–त्रिंशत्तमोऽयं भस्मराशिरुग्रग्रहः–उत्कटग्रहः। कथम्भूतः? एकराशौ ख-ख-नखमितवर्षस्थितिः, खं खं–शून्यं शून्यं नखाः विंशतिस्तन्मित(२०००) वर्षस्थितिः–अङ्कानां वक्रगत्या द्विसहस्रवर्षस्थितिः। च–पुनः एतत्–प्रत्यक्षम् अन्त्यमाश्चर्यम्–असंयतपूजालक्षणं तत्समा–पूर्वोक्तत्रिवैरितुल्या, दुष्षमाकालभेदः, जिनमतहतये–जिनमतहानिकरणाय, इत्येवं चतुर्षु दुष्टेषु–शत्रुषु अनुकलं–निरन्तरं पुष्टेषु सत्सु अधुना जैनमार्गो दुर्लभः। एकस्यापि वैरिणः पोषे साधुवृद्धिर्न कथं चतुःशत्रुपोषे जैनमार्ग वृद्धिः?॥ ३०॥

अथ गुणिद्वेषधीद्वारं दर्शयति—

सम्यग्मार्गपुषः प्रशान्तवपुषः प्रीतोल्लसच्चक्षुषः,
श्रामण्यर्द्धिमुपेयुषः स्मयमुषः कन्दर्पकक्षप्लुषः।
सिद्धान्ताध्वनि तस्थुषः शमयुषःसत्पूज्यतां जग्मुषः,
सत्साधून् विदुषः खलाः कृतद्रुषः क्षाम्यन्ति नोद्यद्रुषः॥ ३१॥

व्याख्या—सम्यग्०॥ खला–दुर्जनाः चैत्यवासिनः सत्साधून्–शोभनाननगारान् न क्षाम्यन्ति। कथम्भूतान्? सम्यग्मार्गपुषः–शुद्धमार्गपोषकान्। पुनः किं विशिष्टान्? प्रशान्तवपुषः–प्रशान्तस्वरूपशरीरान्। पुनः कथम्भूतान्? प्रीते उल्लसन्ती चक्षुषी येषां ते तान्। पुनः किम्भूतान्? श्रामण्यर्द्धिचरित्रसमृद्धिमुपेयुषः–प्राप्नुवन्तः। पुनः किम्भूतान्? स्मयमुषः, स्मयम्–अहङ्कारं मुष्णन्तीति अहङ्कारतिरस्कारिणः पुनः

किम्भूतान् ? कन्दर्पकक्षप्लुषः-कन्दर्प एव कक्ष-शुष्कतृण त प्लुषन्ति-दहन्ति ये ते । पुनः किम्भूतान् ? सिद्धान्ताध्वनि-सिद्धान्तमार्गे तस्थुषः-स्थितवन्तः । शमयुषः-उशपमयुक्तान् । पुनः किम्भूतान् ? मत्पूज्यतां-निवेकिपूज्यत्व जग्मुषः-प्राप्तान् । पुनः विदुषः-दक्षान् । अथ कीदृशा. खला. ? कृतद्रुषः-विहितदोषा । पुनः किम्भूताः ? उद्यद्रुषः,उद्यन्-प्रकटीभवन् रुषः-रोषो येषा ते, एवम्भूता, गुणिषु द्वेष वहन्त्येव ॥२१॥

देवीयत्युरुदोषिणः क्षतमहारोषानदेवीयति,
सर्वज्ञीयति मूर्खमुख्यनिवह तत्त्वज्ञमज्ञीयति ।
उन्मार्गीयति जैनमार्गमपथ सन्मार्गपथीयत्यहो ?,
मिथ्यात्वग्रहिलो जनः स्वमगुणाग्रण्य कृतार्थीयति ॥ ३२ ॥

व्याख्या—देवी० ॥ 'अहो ?' इत्याश्चर्ये मिथ्यात्वग्रहिलो जनः-मिथ्यात्वेन गर्गीभूतो लोका, एव कुरुते, तत्राह-उरुदोषिणः-प्रबलदोषयुक्तान् देवीयति-देवतया मन्यते । अथ क्षतमहादोषान्, क्षता'-(नि)नाशिता महादोषा यैस्ते तान् वीतरागान् भ्रमत्वेन अदवीयति-देवतया नाङ्गीकरोति, पुन' मूर्खमुख्यनिवह-मूर्खप्रधानसमूह सर्वज्ञीयति-सर्वज्ञतया मन्यते, तत्त्वज्ञ-तत्त्वज्ञातारम् अज्ञीयति-अज्ञतया मन्यते । जैनमार्गमुन्मार्गीयति । पुनः अपथ-कुमार्ग सम्यक् पथयति-सुमार्गतया मन्यते। अगुणैरग्रण्य-निर्गुणप्राधान्य स्वम्-आत्मान कृतार्थीयति-गुणवत्तया मन्यते ॥ ३२ ॥

सङ्घत्राकृतचैत्यकूटपतितस्यान्तस्तरा ताम्यत,-
स्तन्मुद्राद्दढपाशबन्धनवत शक्तस्य न स्पन्दितुम् ।
मुक्त्यै कल्पितदानशीलतपसोऽप्येतत्क्रमस्यायिन ,
सङ्घव्याघ्रवशस्य जन्तुहरिणव्रातस्य मोक्ष कुत ? ॥ ३३ ॥

व्याख्या—सङ्घत्रा० ॥ जन्तुहरिणव्रातस्य, जन्तव -प्राणिनो भव्यास्त एव हरिण -मृगास्तेषा व्रात-समूहस्तस्य-भव्यजनमृगसमूहस्य मोक्ष.-मुक्ति' कथमपि तु न। कथम्भूतस्य जन्तुहरिणव्रातस्य ? सङ्घव्याघ्रवशस्य, सङ्घ-हीनाचारिसमुदायः, स एव व्याघ्र.-मृगारिस्तद्वशस्य-वशीभूतस्य । यथा व्याघ्र-वशस्य हरिणस्य मोक्ष'-छुटन न तथा कुसङ्घव्याघ्रवशस्य भव्यहरिणस्य मुक्तिगमन न । कथम्भूतस्य जन्तुहरिणव्रातस्य ? सङ्घत्राकृतचैत्यकूटपतितस्य, सङ्घस्य-लिङ्गिसमुदायस्य दानाय कृतानि सङ्घत्राकृतानि यानि चैत्यानि-जिनभवनानि श्रावकैर्निर्माप्य लिङ्गिभ्यो दत्तानि, दये 'त्रा' प्रत्यय.,

तान्येव–चैत्यान्येव कूटः हरिणबन्धनयन्त्राणि तत्र पतितस्यान्यस्य मृगस्य कूटे पतितस्य मोक्षः कष्टेन। पुनः कथम्भूतस्य? तराम्–अत्यर्थम् अन्तः–मध्यहृदये ताम्यतः–खेदं कुर्वतः 'कदाछुटिष्येऽह'–मिति खिद्यमानस्य। पुनः कथम्भूतस्य? तन्मुद्रादृढपाशबन्धनवतः, तस्य कुसङ्गस्य मुद्रा–मर्यादा 'अस्मच्चैत्य एव समागन्तव्य'–मिति, सैव दृढः–निविडो यः पाशस्तस्य बन्धनं यस्य स तस्यान्यस्य हरिणस्य दवरिकादिनिर्मितग्रंथिविशेषपाशे पतितस्य मोक्षो नेति। पुनः किम्भूतस्य? स्पन्दितुं–चलितुं न शक्तस्य–न समर्थस्य। पुनः किम्भूतस्य भव्यजन्तोः? मुक्त्यै–मुक्त्यर्थं कल्पितदानशीलतपसोऽपि, कल्पितम्–आचरितं स्वबुद्ध्या दानं शीलं तपो येन तस्य, यद्यपि तपःप्रभृति मुक्त्यर्थं करोति तथापि न मोक्षः। पुनः कथम्भूतस्य? एतत्क्रमस्थायिनः, एतस्य–कुमङ्गस्य यः क्रमः–परम्परा तत्र स्थायिनः। हरिणपक्षे एतस्य मृगस्य प्रहारार्थं सज्जितः क्रमः–चरणस्तत्र स्थायिनः पादपतितस्येत्यर्थः ॥ ३३ ॥ ॥ इति द्वादशकं व्याख्यातम् ॥

पुनरप्याह—

इत्थं मिथ्यापथकथनया तथ्ययाऽपीह कश्चिन्–
भेदं ज्ञासीदनुचितमथो मा कुपत्कोऽपि यस्मात्।
जैनभ्रान्त्या कुपथपतितान् प्रेक्ष्य नृंस्तत्प्रमोहा,–
पोहायेदं किमपि कृपया कल्पितं जल्पितं च ॥ ३४ ॥

व्याख्या–इत्थं० ॥ इत्थम्–अमुना प्रकारेण तथ्ययाऽपि–सत्ययाऽपि मिथ्यापथकथनया, मिथ्यापथस्य–हीनाचारिमार्गस्य कथना–प्रकटना तया, इह प्रवचने कश्चिज्जन्तुर्जिनशासनस्थः मा इदं ज्ञासीत्, यदिदं परदोषोद्घाटनम् अनुचितम्–अयोग्यम्। अथो–अथवा कोऽपि–कश्चिदपि मा कुप्यत्–मा क्रुध्यते यत् 'किमनेन रागद्वेषवाक्येने'–ति कोपं–द्वेषं मा करोतु यस्मात्कारणात् जैनभ्रान्त्या–जैनमार्गभ्रमेण कुपथपतितान् कुपथे हीनाचारीप्ररूपिते पतितान् नॄन्–नरान् प्रेक्ष्य अथ तत्प्रमोहापोहाय, तेषां–जन्तूनां प्रमोहः–अज्ञानं तस्याऽपोहः–निराकरणं तस्मै, तन्मोहनिराकरणाय इदं–प्रत्यक्षं किमपि कियन्मात्रं कृपया–दयया 'अहो! अमी वराकाः कथं भविष्यन्ती?' ति कृपया कल्पितं–प्रोक्तं च–पुनर्जल्पितं–ग्रन्थरचनया प्रारब्धं न तु रागद्वेषाभ्यामिति ॥ ३४ ॥

तत्र कारणमाह—

प्रोद्भूतेऽनन्तकालात्कलिमलनिलये नाम नेपथ्यतोऽर्हन्,
मार्गभ्रान्तिं दधानेऽथ च तदभिमरे तत्त्वतोऽस्मिन् दुरब्धे।

कारुण्याद् य कुबोध नृपु निरसिसिषुर्दोपसङ्ख्या विवक्षे,
दम्भोऽम्भोधे प्रमित्सेत् स सकलगगनोल्लङ्घन वा विधित्सेत् ॥ ३५ ॥

व्याख्या–प्रोद्भू० ॥ य' पुरुषः अस्मिन् दुरध्वे–दुष्टमार्गे हीनाचारिप्ररूपिते दोषसङ्ख्याम्–इयत्तया दोषपरिमाण विवक्षेत्–वक्तुमिच्छेत् स पुरुषः अम्भोधेः–समुद्रस्य अम्भः–जल प्रमित्सेत्–प्रमातुमिच्छेत् वा–अथवा सकलगगनोल्लङ्घन–समस्ताकाशस्य पद्भ्यामुल्लङ्घन विधित्सेत्–कर्त्तुमिच्छेत् । यथा समुद्रजलमानम् आकाशलङ्घन कर्त्तुमशक्य तथा हीनाचारिदोपसङ्ख्या वक्तु न पार्यत इति । कथम्भूत, ? यः कारुण्यात्–दयातो नृपु–नरेपु कुबोध–कुतत्त्वज्ञान निरसिसिपु.–सक्तुमिच्छु । कथम्भूते दुरध्वे ? अनन्तकालात्–अनन्तकालेन प्रोद्भूते–सजाते । पुनः किम्भूते ? कलिमलनिलये–पापस्थाने । पुनः किम्भूते ? नामनेपथ्यत', नाम्ना नेपथ्य–वेपस्तस्मात् नाममात्रवेपधारणतोरर्हन्मार्गभ्रान्ति दधाने 'अहो ! अमी वेषमात्रधारका अपि साधव ' इति भ्रान्ति विधायके । अथ च–पुनरपि तत्त्वतः–परमार्थत.–तदभिमरे, तस्य–अर्हन्मतस्य अभिमरे–घातके चौरप्राये, यथा चौराः प्रच्छन्नवृत्त्या वेपपरावर्त्तेन राजादिक घ्नन्ति तथा एतेऽपि लिङ्गमात्रधारकत्वेनाऽर्हन्मार्गघातका एवेति ॥ ३५ ॥

न सावद्याम्नाया न बकुश–कुशीलोचितयति,
क्रियामुक्ता युक्ता न मद–ममता–जीवनभये ।
न सक्लेशावेशा न कदभिनिवेशा न कपट,–
प्रिया ये तेऽद्यापि स्युरिह यतयः सूत्ररतय ॥ ३६ ॥

व्याख्या–न सा० ॥ ते अद्यापि–साम्प्रतमपि इह–जिनशासने यतयः–साधवः स्युः ये एवंविधाः । किम्भूता ? न सावद्याम्नायाः, सावद्यः–सपापः आधाकर्मभोजनादिरूपम् आम्नाय.–परम्परा येषां ते तथा चैत्यवासाद्याम्नायवन्तो ये नेत्यर्थ । पुन' किम्भूता' ? बकुशकुशीलोचितयति–क्रियामुक्ता न, बकुश–सबलम् अतिचारपङ्केन चारित्र येषां ते बकुशाः, कुत्सित शील–चरण येषां ते कुशीला , तेषामुचिता–योग्या या यतिक्रिया–साधुसामाचारी तया मुक्ता–वियुक्ता न ये तावद् बकुशकुशीलक्रियावन्तस्ते ऽधुना सुसाधव एव, " बकुशकुशीले हिं वट्टपरितित्थ " इतिवचनात् । अत्र पञ्च निर्ग्रन्थाः–बकुश–कुशील–पुलाक–निर्ग्रन्थ–स्नातकभेदात् । बकुशा द्विविधा उपकरण–देहभेदात् । ये वर्षे प्रत्यासत्तिमन्तरेणापि कदाचिद् वस्त्रादिक धावन्ति श्लक्ष्णा घनकादि जिघृक्षन्ति, कदाचित्परिदधते, पात्रदण्डकाद्यपि घृष्टतैलादिमसृणोत्पादित

तैजस्कं च धारयन्ति, उपकरणमप्यतिरिक्तं चार्थयन्ते ते उपकरणबकुशाः । ये करचरण-नखादीन् कदाचिन्निर्निमित्तं भूषयन्ति ते देहबकुशाः । इमे द्विविधा अपि शिष्यादि-परिवारादिकां विभूतिं तपःपाण्डित्यादिप्रभवं च यशः प्रार्थयन्ते, प्रमोदन्ते छेदार्हैश्चाति-चारैर्बहुभिः शबलिता अपि कर्मक्षयार्थमुद्यता इत्यादि । कुशीलो द्विविधः आसेवना-कषायभेदात्, ये ज्ञानदर्शनचारित्रतपांसि किञ्चिदुपजीवन्ति ते आसेवनाकुशीलाः, ये क्रोधादिभिः कषायै-र्ज्ञानादिगुणान् विराधयन्ति ते कषायकुशीलाः मूलोत्तरगुणविराधकाश्च पञ्चनिर्ग्रन्थमध्ये केऽपि । पञ्चानां विस्तरतः स्वरूपं श्री भगवतीसूत्रादिभ्यश्च ज्ञेयम् । ननु ये एवं शिथिलक्रियायुक्ताः कर्त्तितकेशा उपकरणधारकाः मूलोत्तरगुणविराधकास्ते निर्ग्रन्थाः कथं तेषां स्वरूपं केन प्रकारेण ? इति चेदुच्यते-एतेषां कर्त्तव्यता तावत् प्रवाह-मार्गेण नास्ति किन्तु कदाचिन्महति कारणे जाते धावनादिका क्रिया, इति, मूलगुण-विराधनं च मनश्च विराधनादिप्रकारेणेति रहस्यं सदा तत्कर्त्तव्यता नास्तीति ॥ पुनः किम्भूताः ? मदममताजीवनभयैः, मदो-गर्वः, ममता-प्रतिबन्धः, आजीवनभयं भिक्षाद्या जीविकाभयं, तैर्मदममताजीवनभयैः न युक्ताः-न स्पृष्टाः । पुनः किम्भूताः ? न संक्लेशस्य-रौद्राध्यवसायस्य आवेशः-उत्कर्षो येषां ते न संक्लेशावेशाः । पुनर्न कद-भिनिवेशाः, कत्-कुत्सितः अभिनिवेशः-कदाग्रहो येषां ते, तथा कपटप्रियाः-माया-वल्लभा न पुनः किम्भूताः ? सूत्ररतयः सूत्रे रतिर्येषां ते सूत्ररतयः-सिद्धान्तरुचयः ॥३६॥

संविग्नाः सोपदेशाः श्रुतनिकषविदः क्षेत्र कालाद्यपेक्ष्या,-
ऽनुष्ठानाः शुद्धमार्गप्रकटनपटवः प्रास्तमिथ्याप्रवादाः ।
वन्द्याः सत्साधवोऽस्मिन्नियम-शम-दमौचित्य-गाम्भीर्य-धैर्य,-
स्थैर्यौदार्यार्यचर्याविनय-नय-दया-दक्ष्य-दाक्षिण्यपुण्याः ॥ ३७ ॥

व्याख्या-संविग्नाः० ॥ अस्मिन्-जिनशासने एवम्भूताः सत्साधवः-शोभन-साधवो वन्द्याः । किम्भूताः ? संविग्नाः-मोक्षाभिलाषुकाः । पुनः किम्भूताः ? सोप-देशाः, सह उपदेशेन-धर्मोपदेशेन वर्त्तन्ते ये ते सोपदेशाः । पुनः किम्भूताः ? श्रुतनि-कषविदः-श्रुतमेव-शास्त्रमेव निकषः-कषपट्टस्तद्विदः-आगमरहस्यनिपुणाः । पुनः किम्भूताः ? क्षेत्रकालाद्यपेक्ष्यानुष्ठानाः,क्षेत्र-कालाद्यपेक्ष्य-क्षेत्रकालाद्यनुसारि, आदि शब्दाच्छरीरबलादिग्रहः, अनुष्ठानं-कर्त्तव्यता येषां ते द्रव्यक्षेत्रकालभावानपेक्ष्य क्रिया-कर्त्तार इति । पुनः किम्भूताः ? शुद्धमार्गप्रकटनपटवः, शुद्धमार्गस्य प्रकटने पटवः-सावधानाः । पुनः किम्भूताः ? प्रास्तः-दूरीकृतः मिथ्याप्रवादो यैस्ते प्रास्तमिथ्या-

प्रवादाः । पुनः किम्भूताः ? नियम, नियमः-अभिग्रहः, शमः-उपशमः, दमः-इन्द्रियजयः, औचित्य-योग्यता, गाम्भीर्यम्-अलक्ष्यविकारत्व, धैर्य-धीरत्व, स्थैर्य-विमृश्यकारित्वम्, औदार्यम्-उदारत्वम् आर्यचर्या-सत्पुरुषप्रवृत्ति', विनयः-अभ्युत्थानादिः, नय'-न्यायः, दया-कृपा, दक्ष्य-धर्मक्रियाऽनालस्य, दाक्षिण्य-सरलता, एभिर्गुणैः पुण्याः-पवित्राः ॥ ३७ ॥

स्वनामगर्भितकाव्यमाह—

विभ्राजिष्णुमगर्वमस्मरमनाशाद श्रुतोल्लङ्घने,
सज्ज्ञानद्युमणिं जिनं वरवपु -श्रीचन्द्रिकाभेश्वरम् ।
वन्दे वर्ण्यमनेकधाऽसुरनरैः शक्रेण चैनश्छिद,
दम्भारिं विदुषा सदा सुवचसाऽनेकान्तरङ्गप्रदम् ॥ ३८ ॥

व्याख्या-विभ्रा० ॥ जिन-तीर्थंकर वन्दे । किम्भूत जिन ? विभ्राजिष्णुम्-अतिशयै' शोभायमानम् । पुनः अगर्वम्-अहङ्काररहितम् । पुन. अस्मर-कन्दर्परहितम् । पुनः किम्भूत ? श्रुतोल्लङ्घने-सिद्धान्ताज्ञाऽतिक्रमे अनाशादम्, आशां-मनोरथ ददातीति आशादः, न आशादोऽनाशादस्तम् । पुन. किम्भूत ? सज्ज्ञानद्युमणिं, सज्ज्ञानेन प्रधान केवलज्ञानेन द्युमणिं-सूर्यम् । पुनः किम्भूत ? वरा-प्रधाना वपुःश्रीः-शरीरकान्तिः सैव चन्द्रिका-ज्योत्स्ना तया भेश्वर-नक्षत्रनाथ चन्द्रम् । असुरनरैः-दानवमानवैः शक्रेण-इन्द्रेण अनेकधा-अनेकप्रकारेण वर्ण्य-वर्णनीयम् । पुन. एनश्छिदम्, एन'-पाप छिनत्तीति पापच्छेदकमित्यर्थ । पुनः दम्भारिं, दम्भस्य-कपटस्य अरि-वैरी दम्भारिस्तम् । पुनः विदुषां-पण्डितानां सदा-निरन्तर सुवचसा-सुवाक्येन अनेकान्तरङ्गप्रदम्, अनेकान्तः-स्याद्वादस्तस्य रङ्गस्त प्रददातीति अनेकान्तरङ्गप्रदस्तम् । वचनेन भगवान् स्याद्वादत्व प्ररूपयन्तीति । चक्रमाघसम, यथा माघकाव्ये चक्रबन्धतया वर्त्तते तथाऽत्र चक्रमाघतुल्य चक्रबन्ध 'जिनवल्लभेन गणिनेद चक्रे' इति नाम वर्त्तते । चक्रस्थापना प्रसिद्धैव ॥ ३८ ॥

जिनपतिमतदुर्गे कालत साधुवेषै,-
र्विपथिभिरभिभूते भस्मकम्लेच्छसैन्यै ।
स्ववशजडजनानां श्रृङ्खलेव स्वगच्छे,
स्थितिरियमधुना तैरश्यि स्वार्थसिद्ध्यै ॥ ३९ ॥

व्याख्या—जिनपति० ॥ तैः—चैत्यवासिभिः इयं स्वगच्छस्थितिः—स्वगच्छमर्यादा अधुना—साम्प्रतम् अग्रथि—विस्तारिता । कस्य ? स्वार्थसिद्ध्यै—स्वोदरभरणप्रयोजनाय । कथम्भूता ? स्ववशजडजनानां, स्ववशाः—आत्मवशा ये जडाः—मूर्खाः जनाः—लोकास्तेषां शृङ्खला इव 'अस्मान् विमुच्य नान्यत्र गन्तव्यम्' एवं शृङ्खला । क सति ? साधुवेषैः—साधुवेषमात्रधारकैस्तैरेव कालतः पञ्चमारकात् जिनपतिमतदुर्गे अभिभूते—पराभूते, जिनपतेः—तीर्थंकरस्य मतं—शासनं तदेव दुर्गः—कोट्टविशेषस्तस्मिन् । कथम्भूतैः ? विषयिभिः—विषयसेवकैः । पुनः किम्भूतैः ? भस्मकम्लेच्छसैन्यैः, भस्मकः—भस्मग्रह एव म्लेच्छः—तुरुष्काधिपतिस्तस्य सैन्याः सैन्यस्वरूपास्ते, यथा तुरुष्काधिपतेः सैन्यं भवति तथा भस्मकस्यैते सैन्या इति ॥ ३९ ॥

सम्प्रत्यप्रतिमे कुसङ्गवपुषि प्रोज्जृम्भिते भस्मक-
म्लेच्छातुच्छबले दुरन्तदशमाश्चर्ये च विस्फूर्जिते ।
प्रौढिं जग्मुषि मोहराजकटके लोकैस्तदाज्ञापरै-
रेकीभूय सदागमस्य कथयाऽपीत्थं कदर्थ्यामहे ॥ ४० ॥

॥ इति श्रीसङ्घपट्टकसूत्रं सम्पूर्णम् ॥

व्याख्या—सम्प्र० ॥ लोकैर्वयम् इत्थम्—अमुना प्रकारेण कदर्थ्यामहे । कया ? सदागमस्य कथयाऽपि, सन्—प्रधानः आगमः—सिद्धान्तस्तस्य सदागमस्य कथयाऽपि—कथनेनापि । यदा शुद्धमार्गस्य कथाऽपि क्रियते तदा लोकाः कदर्थनां कुर्वन्तीति । क सति ? सम्प्रति—अधुना भस्मकम्लेच्छातुच्छबले प्रोज्जृम्भिते, भस्मकः—भस्मग्रहः, स एव म्लेच्छः—तुरुष्काधिपतिस्तस्य अतुच्छं—प्रचुरं बलं तस्मिन् प्रोज्जृम्भिते—प्रोद्दीप्ते सति । कथम्भूते बले ? अप्रतिमे—महातेजस्विनि, पुनः कथम्भूते ? कुसङ्गः—वपुषि, कुसङ्गः—हीनाचारिसङ्घ एव वपुः—शरीरं यस्य स तस्मिन् प्रत्यक्षतो दृश्यमानकुसङ्घशरीरे च—पुनः दुरन्तदशमाश्चर्ये—दुष्टासंयतपूजालक्षणदशमाश्चर्ये विस्फूर्जिते—प्रकटीभूते सति । कविवचसा दशमाश्चर्यस्य पञ्चमारके प्रादुर्भावः । पुनः मोहराजकटके—मोहनीयकर्मरूपराजसैन्ये प्रौढिं—विस्तारत्वं जग्मुषि—प्राप्तवति । भस्मकग्रहचैत्यवास्यादयः सर्वेऽपि मोहनीयसैन्यरूपा एव । किं कृत्वा कदर्थ्यामहे ? एकीभूय—एकपक्षतां कृत्वा । कथम्भूतैर्लोकैः ? तदाज्ञापरैः, तस्य—मोहराजस्य आज्ञा, तत्र पराः—सावधानास्तैः—मोहाज्ञावशवर्त्तिभिः । संसाररूपनगरे मोहराजा दुस्सङ्घस्तस्य सैन्यं—भस्मग्रहो महासामन्तो दशमाश्चर्यं द्वितीयः सामन्त इति रहस्यमिति काव्यार्थः ॥ ४० ॥

## ग्रन्थकारप्रशस्तिः

श्रीमत्खरतरगच्छे श्रीमज्जिनभद्रसूरिशाखायाम् ।
श्रीपद्ममेरुसुगुरु—र्व्यवहार्यत्वयसुर दुरि च ॥ १ ॥

तच्छिष्यो वाक्पतिरिह, श्रीमन्मतिवर्द्धनो गुरुर्जीयात् ।
श्रीमेरुतिलकनामा, तत्पाद्यमकल्पिक समभूत् ॥ २ ॥

तच्छिष्यौ प्रवरगुणौ, दयाकलशसद्गणिप्रभाद्युमणिम् ।
अमरमाणिक्यसुगुरु, समस्तसिद्धान्तधौरेय ॥ ३ ॥

तच्छिष्येण सुविहिता, सुगमेय साधुकीर्त्तिगणिनाऽपि ।
एकोनविंशसमधिक,–षोडशसंवत्सरे प्रवरे ॥ ४ ॥

माघमासे शुक्लपक्षे, पञ्चम्या प्रवरयोगपूर्णायाम् ।
विबुधैः प्रपठ्यमाना, समस्तसुखदायिनी भवतु ॥ ५ ॥

॥ इति श्रीजिनवल्लभसूरिकृत–सङ्घपट्टावचूरि सम्पूर्णा ॥



कविचक्रवर्त्ति श्रीजिनवल्लभसूरिविरचितः पण्डितलक्ष्मिसेनविहितया स्फुटार्थाभिधया लघुवृत्त्यासनाथः ।

# सङ्घपट्टकः

इन्दीवरप्रभमनिंदितकांतिशाति-
धामार्चितं सुरवरैः किल वासवाद्यैः ॥
श्रीमज्जिनेशचरणं तरणाय सद्यः ।
सर्वेजना नमत किं कुरुतान्य चिन्ताम् ॥ १ ॥

गम्भीरार्थगतेर्लसत्पदरतेः श्रीसंघपट्टाभिध,-
ग्रन्थस्यास्य यथामति प्रकुरुते टीकां स्फुटार्थभिधाम् ।
लक्ष्मीसेनसुधीः सुधीरनिवह प्रीत्यै जिनेशप्रभोः
पादाब्जा-चैनलब्ध सन्मति रति श्रीमान् हमीरात्मजः ॥ २ ॥

तत्र तावदाद्यश्लोकार्थविवेचनमारभ्यते—

वन्हिज्वालावलीढं कुपथमथनधीर्मातुरस्तोकलोक ॥ १ ॥

व्याख्या—'वह्नि'रिति-तं देवं-पार्श्वनाथं वयं स्तुमः-प्रणमामः । तं कं ? यो देवः इति जगादेव-उक्तवानिव इति, किं ? प्राज्ञैः-पण्डितैः सद्यः-तत्क्षणादेव कुमार्ग-स्खलनं कार्यं-कर्त्तव्यं, सिद्धान्तविरुद्धमतनिराकरणं कर्तव्य-मित्यर्थः । किं कृत्वा ? स्वस्य आत्मनः विधुरमपि प्रपद्य । अपि सम्भावने कोऽर्थः ? कुमार्गस्खलनाद् यदि आत्मनो विधुरमपि किञ्चिद् भवति तथापि इति । किं कुर्वन् उक्तवान् ? कमठमुनितपः उच्चैः-अतिशयेन दुष्टं प्रकटयन्-प्रकटीं कुर्वन् । कोऽर्थः ? कमठनामतापसस्तावदेकः कश्चित्तपस्वी पञ्चाग्नि नाम तपः कुर्वन् पार्श्वनाथेनावलोकित, तस्य तत् तपो भगवता दुष्टं कृतमित्यर्थः ॥ किं कृत्वा ? अखिललोकस्यग्रे ज्वलत्काष्ठमध्यात्सर्पं सन्दर्श्य, न केवलं अखिल-लोकस्याग्रे मातुर्वामदेव्याश्चाग्रे वामादेवी भगवन्माता, तस्या अपि पुरतः इत्यर्थः किं विशिष्टं नागं ? "अग्निज्वालावलीढं" अग्निशिखाकवलितं-अर्द्धदग्ध मित्यर्थः कथम्भूतो यः परमेश्वरः ? कुमार्गछेदनबुद्धियुक्तः । पुनः कथम्भूतः ? कारुण्यामृताब्धिः-कृपा-पीयूषसागरः ॥ १ ॥

श्रीउपदेशमणनयोग्य श्रोतार निरूपितुमाह—

कल्याणाभिनिवेशवानिति गुणग्राहीति मिथ्यापथ ॥ २ ॥

व्याख्या—कल्याणाभि०–श्रोतॄणां चतुर्दशगुणाः, श्रोतृशब्दाः सर्वेऽप्यत्र हेत्वर्थाः। अथ श्लोकान्वयः–भो श्रोतः! मया ग्रन्थकर्त्रा त्वमुच्यसे–कथ्यसे कथमिति? कल्याणाभिनिवेशवानिति, कोऽर्थः शुभरूपाग्रहवान् शोभनस्य रूपस्य आग्रहो विद्यते अस्येति स तथा। पुनः कथमिति? गुणग्राहीति गुणग्रहीतु शीलमस्येति गुणग्राही। पुनः कथमिति? मिथ्यापथप्रत्यर्थीति यथा–छन्द प्ररूपितोत्सूत्रमार्गस्तस्य विरोधी, पुनः कथमिति? विनीत इति ऋजुस्वभाव इति, अर्थाद् गुर्वादिषु। पुनः कथमिति अशठ इति अधूर्त इति। पुनः कथमिति? औचित्यकारीति–उचितस्य भाव औचित्य, तत् कर्तुं शीलमस्येति। पुन. कथमिति? दाक्षिण्यीति दाक्षिण्ययुक्त'। पुन, कथमिति? दमीति–जितेन्द्रिय', पुनः कथमिति? नीतिभृदिति–नीतिं बिभर्तीति नीतिभृत्–सदाचारपरायण इत्यर्थ. पुन. कथमिति? स्थैर्यीति–स्थैर्यगुणयुक्तः स्थिर इत्यर्थ'। पुनः कथमिति? धैर्यीति–धीर इत्यर्थ'। पुन' कथमिति? सद्धर्मार्थीति–सतां धर्मः सद्धर्म तस्यार्थः, सोऽस्यास्तीति शोभनधर्मगवेषकः। पुन' कथमिति? विवेकवानिति–युक्तायुक्तविचारचतुरः इत्यर्थः। पुनः कथमिति? सुधीरिति प्राज्ञ इत्यर्थ' ॥ २ ॥

इदानीं युग्मश्लोकयो–र्व्याख्यानमारभ्यते—

इह किल कलिकालव्यालवक्त्रान्तराल ॥ ३ ॥
प्रोत्सर्पद् भद्रमराशिमहसगदशमाश्चर्यसाम्राज्यपुण्य ॥ ४ ॥

व्याख्या—इह० ॥ प्रो० ॥ "किलेति" प्रसिद्धि इह जगति विषयिभि. स्रक्चन्दनवनितादिसेविभिः अभितः–समतात्। सोप यथा अप्रार्थि–प्रार्थित –व्यापितः। कथम्भूत' यथा? जिनोक्तिप्रत्यर्थी–जैनशास्त्रविरोधी, कस्मिन् सति? प्राणिवर्गे जीवसमूहे जैनेन्द्रमार्गे–जिनशासने विरलतां–तुच्छतां याति सति, कथम्भूते प्राणिवर्गे? कलिकालव्यालवक्त्रान्तरालस्थितिजुषि। कलिकाल एव व्यालः–सर्पस्तस्य वक्त्र तस्यान्तराल–मध्य तत्र स्थिति.–स्थान, तत् जुषते सेवते य तस्मिन्। पुन कथम्भूते प्राणिवर्गे? गततत्त्वप्रीतिनीतिप्रचारे। गतौ–नष्टौ तत्त्वप्रीतिनीतिप्रचारौ यस्य तस्मिन्, इदानीं प्राणिवर्गे तत्त्वप्रीतिर्नास्ति। नीते. प्रचारो व्यवहारश्च नास्तीत्यर्थः।

पुनः कथम्भूते ? प्रसरदनवबोधे–प्रादुर्भवत् सम्यक्सिद्धान्तापरिज्ञाने, कोऽर्थः ? सिद्धांतार्थसम्यग्ज्ञानरहिते । पुनः कथम्भूते ? प्रस्फुरत् कापथोथस्थगितसुगति-सर्गे उन्मीलन्तः–प्रकटी भवंतः ये कुमार्गाः–कुत्सितमार्गाः ते स्थगितः–तिरस्कृतो रुद्धः–अपवर्गलक्षणायाः सुगतेः सर्गो–निष्पत्तिर्यस्य तस्मिन् । कथम्भूतैः साधुवेषैः विषयिभिः ? संक्लिष्टद्विष्टमूढप्रखलजडजनाम्नायरक्तैः । कोऽर्थः ? समानधर्मजनो-पतापकारि–मत्सरि–हेयोपादेयविमर्शशून्यप्रकर्षपिशुनः दुर्बुद्धिचतुर्विध संघः, तस्या-म्नायः–शिष्यप्रशिष्यादिसंतानः, तत्र रक्ताः–प्रीतिमंतः, तैः । पुनः कथम्भूतैः ? साधुवेषैः–सन्मुनिचिह्नधारिभिः कथम्भूते जैनेन्द्रमार्गे ? 'प्रोत्सर्प'दित्यादि प्रोज्जृम्भ-माणो यो भस्मराशिनामा क्रूरग्रहः, तस्य सखा–मित्रम्, असंयतपूजाख्यं रिपुविजय-पुरःसरं आज्ञैश्वर्यं वर्द्धमानं अतत्त्वे तत्त्वप्रतिपद्यमानरूपं यद् दशमाश्चर्यं तस्य साम्रा-ज्येन–प्राचुर्येण पुष्यन्=प्रादुर्भवन् मिथ्यात्वं, तदेव ध्वांत–तमिस्रं तेन व्याप्ते । अन्योऽपि मार्गो यद्यन्धकारावृतो भवति तदोच्छन्नतां यात्येव ॥ ३–४ ॥

इदानीं योग्यस्य श्रोतुः पुरतो धूर्त्तकल्पिते पथि दशभिर्द्वारैस्तत्र निरूपितं धर्मं प्रतिपादयन् तस्य धर्मस्य कर्मनिर्मूलने सामर्थ्यमसंभावयन्नाह—

यत्रौद्देशिकभोजनं जिनगृहे वासो वसत्यक्षमा....॥ ५ ॥

व्याख्या—"यत्रौ०" यस्मिन्मार्गे औद्देशिकभोजनं, कोऽर्थः ? यतीन् मनसि कृत्वा निष्पादितं, जिनगृहे वासः–अर्हद्भवने सर्वदा निवासः, वसत्यक्षमा–गृहस्थ-गृहे वासं प्रति मात्सर्यम्, अर्थं गृहस्थचैत्यसदनेषु स्वीकारः–द्रव्यश्रावकजिनगृहेषु अङ्गीकारः, अप्रेक्षिताद्यासनं–स्वचक्षुषा अदृष्ट–मासनम्, सावद्याचरितादरः–सपापं-यदाचरितं, तस्यादरः, श्रुतपथावज्ञा–सिद्धान्तमार्गस्याऽनादरः, गुणिद्वेषधीः–यतिषु द्वेषबुद्धिः, इति दशद्वाराणि । एतैर्दशद्वारैः प्ररूपितो धर्मः । अत्र–असाधुकल्पिते पथि कर्म्महरश्चेद् भवेत्–कर्मक्षयकारी भवेत् तदा अब्धौ–समुद्रे मेरुस्तरेत् । यदा मेरुः समुद्रे तरति तदा एतस्माद् धर्म्मात् मोक्षो भवतीत्यर्थः ॥ ५ ॥

साम्प्रतमेतेषामेव दशद्वाराणां यथाक्रमं प्रत्याख्याने चिकीर्षुः प्रथमं तावज्जीवोप-मर्ददोषदृष्ट्या औद्देशिकभोजनद्वारं निषेद्धुमाह—

षट्कायान् उपमर्द्य निर्दयमृषीनाधाय यत् साधितं....॥ ६ ॥

व्याख्या—षट्कायानुपम० । नामेति संभावनायाम्, इह-प्रवचने सघृणो-दयालुः कः तद् भोजनं भोक्तुमिच्छति ? अपितु न कोऽपि-इत्यर्थः । किं कुर्वन् ? मह्यादिनिमित्तमेतन्निष्पन्नमिति जानन् । किं तद्भोजनं यत् षट्कायान्-षड्विधजीवनिकायान् उपमर्द्य-हत्वा निर्दयं यथा स्यात्, एवम् ऋषीन्-यतीन् आदाय-मनसि कृत्वा यत् साधितं निष्पादितं यद् भोजनम् असकृद्-वारं वारं शास्त्रेषु प्रतिषिध्यते-निवार्यते निशीथादिग्रन्थेषु यस्य निषेधो वर्तते, तद् भोजनं निस्त्रिंशताधायि निष्करुणताकारकम् । पुनः यद् भोजनं पण्डिताः गोमांसाद्युपमम् आहु'-गोमांसादिसदृशं कथयति सूत्रादि । यद् भोजनं भुक्त्वा यतिरधोयाति-नरकं गच्छति तद् भोजनं प्राज्ञः कोऽपि न भोक्तुमिच्छति-इत्यर्थः ॥ ६ ॥

प्रथमं तावत् भोजनद्वारं निषेध्य जिनगृहनिवासं निषेधयितुमाह—

गायद् गन्धर्वनृत्यत् पणरमणिरणद् वेणुगुञ्जन्मृदङ्ग ॥ ७ ॥

व्याख्या—"गायद् गन्धर्व०" खलु इति निश्चये अर्हन्तमतज्ञाः-जिनशास्त्र-निपुणा' सन्तः जिनगृहे न वसन्ति—न सततमवतिष्ठन्ते । कुतः ? विकारहेतुत्वात् । किं विशिष्टाः सन्तः ? त्रसन्तः, कस्यः ? देवद्रव्योपभोगध्रुवमठपतिताऽऽशातनाभ्यः । देवद्रव्यस्य जिननैवेद्यादेः उपभोग., सततं शयन, भोजनादिकरणे उपभोग', ध्रुव-निश्चयं मठपतिता-मठाधिपत्य, तथा भगवदाशातनाः-जिनानां चतुरशीतिराशातना', एतेभ्य. बिभ्यन्तः । कथम्भूते जिनगृहे ? ' गायद् गन्धर्वे 'त्यादि, गायन्तः गन्धर्वाः प्रधानगायनाः यत्र नृत्यन्त्यः पणरमण्यो-वेश्या यत्र, रणन्तो-मधुरं ध्वनन्तो वेणवो-वंशा' यत्र, गुञ्जन्तो गम्भीरं स्वनन्तो मृदङ्गा प्रेङ्खन्त्योलम्बमाना' पुष्पस्रज'-पुष्पमाला यत्र, उद्यत्-सर्वत' प्रसरत् आमोदद्वारेण मृगमदा-कस्तूरिका यत्र, लसन्त -पट्टांशुकमयत्वाद्दीप्यमाना उल्लोचानि-वितानानि यत्र, महाघनवसनभूषणाङ्गरागादि भूषितशरीरत्वात् शोभमाना जनौघाः-श्रावकसमूहा यत्र, तस्मिन् ॥ ७ ॥

वसत्यक्षमाद्वारं निरसितुं श्लोकद्वयेनाह—

साक्षाज्जिनैर्गणधरैश्च निषेधितोक्तां ॥ ८ ॥

चिन्नोत्सर्गापवादे यदिह शिवपुरीदूतभूते निशीथे ॥ ९ ॥

व्याख्या—साक्षा० सवर्ण -सधन क. पुमान् परगृहे-गृहस्थगृहे वसतिं-

निवासं विद्वेष्टि। अकर्णः पुमान् कर्णौ विना सिद्धान्तोक्तामपि परगृहवसतिम्–अनाकर्णयन् निषेधेदपि। यः पुनः सकर्णः–श्रवणः स परगृहवसतिं यतीनामनुमोदयत्येव, न तु द्वेष्टि। किं कुर्वन्? मुनिपुङ्गवानां–यतिश्रेष्ठानां अनगारपदं जानन्–न विद्यते अगारो यस्येति जानन्। अथवा किं विशिष्टां वसतिं? 'शय्यातरोक्ति'मिति, शय्या वसतिराख्याता यतिभ्यो दानतया, तरति भवाम्भोधिं यया अनगारपदं शास्त्रे हि यतिवाचकत्वेन प्रतिपदं श्रूयते। ननु स्वगृह एव किमिति यतयो न वसति? तत्राह–मुनिपुङ्गवानां निःसंगता–स्वजनादि रहितत्वं अग्रिमपदं–मुख्यस्थानम्। किंविशिष्टा निःसंगता? साक्षात्–प्रत्यक्षं जिनैः–तीर्थकृद्भिः निषेविता–उपभुक्ता, स्वमुखेन उक्ता च कथिता, न केवलं जिनैर्गणधरैश्च–गौतमप्रभृतिभिः। यतीनां स्वगृहं नास्त्येव, अतः परगृहवसतिरेव श्रेयसीत्यर्थः ॥ ८ ॥

व्याख्या—'चित्रोत्सर्गा०' सर्वत्र–सर्वस्मिन् वसति अधिकारे आगारस्वाम्नि–गृहस्थ गृह एव यतीनां निवासो न्ययासि, कोऽर्थः? व्यवस्थापितः, न तु क्वापि–कस्मिन्नपि ग्रन्थे, चैत्ये–जिनगृहे निवासो निरूपितः। किं कृत्वा? प्रागुक्त्वा–प्रथमं निशीथे भूरिभेदाः–बहुभेदाः वसतीः उक्त्वा। किं विशिष्टे निशीथे? चित्रोत्सर्गापवादे। चित्रौ–नानाविधौ बहुप्रकारौ उत्सर्गापवादौ–सामान्यविधि–विशेषविधी यस्मिन्। पुनः कथम्भूते निशीथे? शिवपुरीदूतभूते–मुक्तपुरीसन्देशहरसदृशे। पुनः किं कृत्वा? पश्चात्–तदनन्तरं कारणेऽपोह्य–अपवादविषयीकृत्य। किं विशिष्टे अगारस्वाम्नि? स्त्रीसंसक्त्यादि युक्तेऽपि–स्त्रीपण्डकादिसहितेऽपि। ननु विकारसामग्रीसहिते गृहस्थ–गृहे कथं यतीनां निवासः? इत्याह—अभिहितयतनाकारिणामिति–निशीथोक्तयतना सावधानानां संयतानां किं विकारहेतुभिरित्यर्थः ॥ ९ ॥

ननु एवं यतना सावधानानां चैत्यवासेऽपि को दोषः? इत्यतः आह—

प्रव्रज्यापरिपंथिनं ननु धनस्वीकारमाहुर्जिनाः ॥ १० ॥

व्याख्या—"प्रव्रज्या०" ननु निश्चितं तीर्थंकराः धनस्वीकारं–द्रव्यस्याङ्गीकारं प्रव्रज्यापरिपंथिनमाहुः॥ कोऽर्थः? दीक्षाशत्रुभूतं कथयन्ति स्म। क्व धनसंग्रहः? क्व दीक्षेतिद्वारम्। तु पुनः सर्वारंभ–परिग्रहं–सकलपापसहितानां गृहिणं। परिग्रहं अतिमहासावद्यं अतिशयमहासपापं आचक्षते–कथयंति। तेन गृहस्थपरिग्रह, सर्वथा यतीनां नोचित इति द्वारम्। चैत्यस्वीकरणे तु माठपत्यमेव स्यात्। यदा यतीनां जिनगृहस्य

स्वीकारास्तदा मठाधिपत्यमेव भवेत् । कथम्भूत माठपत्यम् गर्हिततम-प्रकर्षेण निन्दित । यद्वा इति हेतोर्मुक्त्यर्थिनां पुंसाम् इति ममता युक्ता न-द्रव्यादिषु ममत्व युक्त नेत्यर्थः । कथम्भूता ममता ? व्रतवैरिणी चारित्रशत्रुभूता ॥ १० ॥

तत्र दशद्वाराणां मध्ये षड् द्वारा निषेध्य अवशिष्टद्वारचतुष्टय निषेधयितुमाह श्लोक चतुष्टयेन—

भवति नियतमत्रासयम स्याद् विभूषा ॥ ११ ॥
गृही नियतगच्छभाक् जिनगृहेऽधिकारो यते ॥ १२ ॥
निर्वाहार्थिनमुज्झित गुणलवैरज्ञातशीलान्वय ॥ १३ ॥
दुष्प्रापा गुरुकर्म्मसचयवता सद्धर्मबुद्धिर्नृणां ॥ १४ ॥

व्याख्या—अत्र श्लोके सप्तम द्वार गद्दिकाद्यासन निषिध्यते । अत्र गद्दिकाद्यासने विभूषा स्यात्-शोभा भवेत् । न केवल शोभा, असयमश्च भवति । कोऽर्थः ? जीवरक्षाऽभावश्च भवति नियत-सर्वदा गद्दिकाद्यासने कथ शोभा भवेत् ? तत्राह- "नृपतिककुद" एतदिति, यतः एतदासन नृपतिककुद-राज्यचिह्नमिति । तर्हि शोभाऽप्यभीष्टैवेत्याह-लोकहासश्चेति गद्दिकाद्यासने भिक्षोः केवल शोभैव न भवति किन्तु लोकोपहासश्च भवति-'अहो ! भिक्षोपजीविनो मुण्डिता अपि एवविधेष्वासनेषूपविशति'। इह सग' लोकविदित' गद्दिकादौ परिग्रहः, उच्चैः-अतिशयेन सातशीलत्व-सुख लोलुपता, इति हेतो मुमुक्षोः मोक्षाभिलाषिण. पुरुषस्य गद्दिकाद्यासन सगत न-युक्त नेत्यर्थः । इति सप्तम द्वारम् ॥ ११ ॥

सावद्याचरितादराख्यमष्टम द्वार निरूपयन्नाह—

व्याख्या—' गृही नियतगच्छ० ' गतानुगतिकैः-गड्डरिकाप्रवाहरूपैः अनगारिणां-यतीनाम् असस्तुतम्-अनुचितम्, अदः-एतत् कथ प्रस्तुत-प्रारब्धम् । एतत् किं ? गृही-श्रावको नियतगच्छभाग् भवति, कोऽर्थ' ? आत्मसदृशो गच्छो येषाम् तेषामेव समुदाय भजनेन गुणदोषादिक विचारयति अन्य यतेः मुनेः जिनगृहे अधिकारः एतदपि विरुद्ध-मेव, अपर च आरभिभि'-गृहिभिः साधुषु-यतिषु यथा तथा, कोऽर्थः ? येनैव प्रकारेण तेनैव अशुद्धमपि अशनादि-भक्तपानादिप्रदेय-वितरणीयम् । एतदपि विरुद्धमेव । अपर च व्रतादिनिषिधारण-सर्वविरत्यादिनिषेधर्वारण-निषेधः । एतदपि विरुद्धम् । सुविहितान्तिके-सन्तिके-सन्मुनिसमिपे कथ प्रारब्धमित्यर्थः ॥ अष्टम द्वारम् ॥ १२ ॥

नवमं द्वारं निशेधयितुमाह —

व्याख्या—निर्वा० जनाः-लोकाः यत् ईदृशं यतिं देवेभ्योऽपि-जिनेभ्योऽपि अधिकं यथा स्यात् तथा अर्चयन्ति-पूजयन्ति तत् महतः-प्रबलस्य मोहस्य-अज्ञानस्य जृम्भितं-लीलायितं। कीदृशं यतिं ? निर्वाहार्थिनं, कथं ? निर्वाहो-जीविका भवतीत्यय-मेवार्थः प्रयोजनं यस्य तम्। पुनः कीदृशं ? गुणलवैः-गुणलेशैरपि उज्झितं-त्यक्तम्। पुनः कथम्भूतं ? अज्ञातशीलान्वयं अविदिताचारकुलं पुनः कथम्भूतं गुरुणा-आचार्येण स्वार्थाय-प्रयोजनाय मुण्डीकृतं-दीक्षां नीतम्। कथम्भूतेन गुरुणा ? तादृग्वंशजतद्-गुणेन-तादृग्शिष्यवंशजातेन तद्गुणेन-शिष्यसदृशगुणेन। किंविशिष्टा जनाः ? विख्यात-गुणान्वया अपि-प्रसिद्धगुणवंशजाता अपि। अकुलीनाः-कुलीनं पूजयति तदा पूजयन्तु, (किन्तु) कुलीना अपि अकुलीनं पूजयन्ति, इतिमोह प्राबल्यम्। पुनः किंविनिष्टाः ? लग्नो-ग्रगच्छग्रहाः-चेतसि निविष्टो यः उग्रगच्छप्रतिबन्धः तद् युक्ता इत्यर्थः। द्वारम् ॥९-१३॥

'गुणद्वेषधी' इतिद्वारं निषेधयितुमाह—

व्याख्या—दुष्प्राप्या० ॥ गुरुकर्मसञ्चयवतां-गरिष्टसंसारबन्धहेतुकर्मयुक्तानां प्राणिनां सद्धर्मबुद्धिर्दुष्प्राप्या, कोऽर्थः ? दुःखेन प्राप्यते तस्यां सद्धर्मबुद्धौ जातायामपि उत्पन्नायामपि शुभगुरुर्दुर्लभः यो गुरुरिष्टतरं किञ्चिदुपदिशति। सोऽपि शुभगुरुः पुण्येन यदि प्राप्यते तथापि अमी जनाः स्वहितं कर्तुं नालं-आत्मनो हितं कर्तुं न समर्थः। किं विशिष्टा जनाः ? गच्छस्थितिव्याहताः-'युष्मत्कुलादतोऽयं गच्छस्तत एनं गच्छं त्यक्त्वा भवद्भिर्नान्यपार्श्वे श्रवण-सम्यक्त्वव्रतप्रतिपत्त्यादिकं विधेयम्' इति गृहस्थस्य यतिविहिता व्यवस्था, तया गच्छस्थित्या व्याहताः-वशीकृता इत्यर्थः, अतो हेतोः किं ब्रूमः-किं भणामः ? इह-संसारे, किम् आश्रयेमहि-निषेवेमहि ? किम् आराध्येमहि-कस्याराधनां कुर्मः ? किं वा कुर्महे-विदध्मः, इति दशमं द्वारम् ॥ १४ ॥

एतेन प्रव्रज्याऽपि कुलीनस्यैव योग्येति प्रतिपादयन्नाह—

क्षुत्क्षामः किल कोऽपि रङ्कशिशुकः प्रव्रज्य चैत्ये क्वचित् ॥ १५ ॥

व्याख्या—'क्षुत्क्षामः' किलेति संभावने कोऽपि रङ्कशिशुकः-अज्ञातनामा क्षुत्क्षामसन्-बुभुक्षादुर्बलः सन् क्वचिदनिर्दिष्टनाम्नि चैत्ये-जिनगृहे प्रव्रज्य-दीक्षां गृहीत्वा कञ्चनं श्रावकं पक्षं कृत्वा तदाचार्यकं प्राप्तः-सूरिपदं गतः सन्, कथम्भूतः ?

अक्षतकलिः अखण्डितकलहः चित्रम्-आश्चर्य-चैत्यगृहे गृहीयति गृह इव आचरति। निजे गृहे कुटम्बीयति-कुटुम्ब इवाचरति। स्व-आत्मानं शक्रीयति-शक्रमिवाचरति बुधान्-पण्डितान् बालिशीयति-मूर्खानिवाचरति। विश्व-जगत् वराकीयति-रङ्कमिवाचरति, अतो मूर्खबहुल जगत्, यतः कुलशीलादिक न विचारयति किञ्चित् मोहनोबाटनाद्यद्भुतमवलोक्य दुष्टमपि यतिं देववत् पूजयन्तीत्यर्थः ॥ १५ ॥

अस्मिन्नेवार्थे-अपरमपि वृत्तमाह—

यैर्जातो न च वर्द्धितो न च न च क्रीतोऽधमर्णो न च ॥ १६ ॥

व्याख्या—यैर्जातो० ॥ तैरेव अधमाधर्म'-अत्यधमैः यतिभिः अयं जनो-लोक बलात् हठात् वाह्यते-यत्र तत्र नीयते अतः हा! इति कष्टे इद जगत् नीराजक-राजशून्य, राजा चेद् भवति तदा एतदनुचित न भवति-इत्यर्थः। तैः कैः? यैः यतिभिरयं लोको न जातः-नोत्पादितः योगक्षेमाभ्सिपादनेन, यैर्न च वर्द्धित -शरीरपोषण न प्रापित., यैर्न च क्रीतः-अन्यस्मान्मूल्यदानेन न गृहीतः, न च अधमर्णन-उद्धारादिप्रयोगेण गृहीतः, न च प्राक्-पूर्वं दृष्टः-अवलोकितः, न च बान्धव पितृव्यभ्रातृसम्बन्धवान्, न च प्रेयान् वल्लभतरः, न च प्रीणित'-तोषितः। एतावता ये यतय' न दृष्टा, न श्रुता., न च सबन्धिनः, तैर्दुर्दैर्यतिभिः अयं जनो लोकः बलाद् वाह्यते। किंवत्? नस्योतपशुवत् यथा नस्यितः पशुर्यत्र तत्र नीयते इत्यर्थः। चकार. सर्वसमुच्चयार्थः ॥ १६ ॥

कुपथावस्थितजडजनानवलोक्य प्रकरणकारः प्राह—

किं दिग्मोहमिता किमन्धबधिरा किं योगचूर्णीकृता ॥ १७ ॥

व्याख्या—'किं दिग्मोह०' यद् यस्माद्धेतोः अमी जडा -मूर्खा' जनाः कुपथात्-कुमार्गात् व्यावृत्तिम्-अपसरण न दधते-न कुर्वत तस्माद्धेतो एते जना.-लोकाः किं दिग्मोहम् इता' पूर्वादिदिक्षु पश्चिमादिविभ्रमः दिग्मोहः त प्राप्ता.? । किं अन्धबधिरा' जाताः? अन्धाः-नेत्रहीनाः। बधिराः-कर्णहीनाः। किं वा योगचूर्णीकृताः?-मस्तकादिषु चूर्णक्षेपेण वशीकृताः। किं वा दैवोपहता'? दैवेन-विधिना उपहता'-विनाश प्रापिताः। 'अहो'ति सबोधने। किं वा ठगिताः?-स्वायत्तीकृता.। किं वा ग्रहावशिता?-भूतादिशरीराधिष्ठानाः। न केवल कुपथप्रवृत्ता. एव सति किन्तु एतत् कृते, कोऽर्थः? जिनमार्गकृते जिनमार्गनिमित्त असूयन्ति च-ईर्ष्यां कुर्वन्ति च।

किं कृत्वा ? श्रुतस्य मूर्ध्नि- शास्त्रमस्तके पदं–चरणं कृत्वा–विधायेत्यर्थः किंविशिष्टा अमी ? दृष्टोरुदोषा अपि–साक्षादवलोकितकुपथदोषा अपि अदृष्टदोषा हि विवेकिनोऽपि कुपथान्न निवर्तितुं समीहन्ते किं पुनः अन्येऽपि दृष्टदोषाः ते मूर्खा अपि कुपथान्निवर्तन्त एवेति श्लोकार्थः ॥ १७ ॥

सिद्धांते हि रजन्यां जिनस्नात्रं पापपंके निमज्जनाय प्रवदंति इत्यत आह—

इष्टावाप्ति–तुष्ट–विटनटभटचेटकपेटकाकुलं ॥ १८ ॥

व्याख्या—'इष्टावाप्ति०' जिन मज्जनं–जिनस्नानं अविधिना–सिद्धानोक्तविधि-वैपरीत्येन मूढजनेन विहितः सन् अघपङ्के–पापकर्दमे निमज्जनमेव जनयति, कोऽर्थः ? सिद्धान्तोक्तप्रकारेण यदि देवस्नात्रं न विधीयते तदा स्नात्रादपि नरकपतनमेव भवतीत्यर्थः। कथभूतं स्नानम् ? इष्टा वाप्ति तुष्टविटनट–भटचेटक–पेटकाकुलम्, इष्टायाः–प्रियायाः स्नात्रदर्शन व्याजेनागताया अवाप्तिः–मिलनं, तया तुष्टाः विटाः 'निःशङ्क-मत्राघनः सुरतलीलाप्रवर्तिष्यते' इति धिया मुदिता विटाः–वेश्यापतयः, नटाः–नर्तकाः, भटाः–शास्त्रादिकलाजीविनः, चेटकाः–मासादि नियमित[वृत्ति]ग्राहिणः, एतेषां पेटकः–समूहः, तेन आकुलं–क्षुभितम्, पुनः कथम्भूतं स्नात्रं ? निधुवनविधि निबद्ध दोहद नरनारी निकरसंकुलं–निधुवनं–सुरतं तदर्थं निबद्धो दोहदः–अभिलाषो यैस्तैर्नरनारीनिकुरैः–समूहैः संकुणं–व्याप्तं। कथंभूतं स्नानं ? रागद्वेषमत्सरेर्षाघनं–कस्यचित् परवर्णिनीं प्रति रागः–स्नेहः, स्वप्रेयसी मन्येन सह संगच्छमानां पश्यतस्तज्जिघांसया द्वेषः, मत्सरश्च–स्ववल्लाभामन्येन सह लपन्तीमविलोकयतः पुरुषस्य, असहिष्णुता–ईर्षा, ताभिर्घनं–सान्द्रम्, एतावता सकलविकारसामग्री परिपूरितमूर्खजनवि हित–स्नानादपि नरके पतनमेव भवीत्यर्थः ॥ १८ ॥

न केवलं स्नात्रमेव नरकजनकं किंतु अविधि कृतं व्रताद्यपीत्याह—

जिनमतविमुख–विदित–महिताय न मज्जनमेव केवलं ॥ १९ ॥

व्याख्या—'जिनमत०' केवलं जिनमत–विमुखविहितं–जिनशास्त्रविपरीत-कृतं मज्जनमेव 'अहिताय' संसाराय न भवति किं तर्हि ? (किंतु) तपश्चरित्रदानाद्यपि अनशनादि सर्वविरति अपि शिवफलं–मुक्तिरूपफलं न जनयति। एतावता जिनशास्त्र-विपरीत कृतं सर्वमेव निष्फलमेवेति श्लोकार्थः। हि–यतः कारणात् अविधिविधि क्रमात् सिद्धान्तानुक्तोक्तप्रकारेण, सिद्धान्ते यन्नोक्तं तेन प्रकारेण जिनाज्ञाऽपि–अर्हदागमोक्ता-

नुष्ठानमपि अशुभशुभाय–अकल्याणसंपत्तये जायते । 'किं'मित्याक्षेपे वाक्यभेदे वा, 'पुन'रिति हेतुप्रकारेण अहितहेतुः–संसारबन्धनहेतुः विडम्बनैर–लोकोपहासा-स्पदमेव न प्रसार्यते न विस्तार्यते ? अपि तु विस्तार्यत एवेत्यर्थः ॥ १९ ॥

अन्यदप्याह—

जिन गृह–जैनबिम्ब जिनपूजन जिनयात्रादि विधिकृत ॥ २० ॥

व्याख्या—'जिनगृह'० इह–प्रवचने एतदपि सर्वं स्फुट–प्रगट व्यक्तमेव अनभिमतकारि भवति–अनिष्टविधायि भवेत् ॥ कस्मादित्याह—कुमत–कुगुरु–कुग्राह कुबोध–कुदेशनांशत, अस्यार्थः–कुत्सित मत कुमत, कुत्सितो गुरुः कुगुरुः, कुग्राह,–सिद्धान्तग्राह्यस्वमतिकल्पितासत्पदार्थसमर्थनानुष्ठाननिषयो मानसोऽभिनिवेशः, जिन शास्त्रस्याज्ञानादन्यथा परिच्छेद' कुबोधः, सिद्धान्ताभिहितार्थानां विन्यासेन प्ररूपणा भणिता कुदेशना, तासाम् अंशतः–लेशत. । एतत् किं ? जिनगृह–अर्हद्भवन, जैनबिंब–भागवती प्रतिमा, जिनपूजन–भगवत्पूजा, जिनयात्रादि–भगवत्कल्याणकाष्टाह्नि कादि, एतत् सर्वं विधिकृतमपि–जिनोक्तप्रकारेण निष्पादितमपि दानतपोव्रतादि–दान तपसी पूर्वं व्याख्यातम्, व्रतादि–स्थूलप्राणातिपातविरमणादि, गुरुभक्तिः–आचार्य शुश्रूषा, श्रुतपठनादि–सिद्धान्ताध्ययन । एतत् सर्वमपि उक्तहेतो. अनिष्ट विधायि भवेत् आदृतमपि–सबहुमानमपि । किमिव ? वरभोजनमिव यथा सर इव भोजन विषलवनिक्षेपतः–गरलकणनिक्षेपात् अनभिमतकारि भवति–अनिष्टविधायि भवति, एतावता कुमतादि समर्गाज्जिनपूजनादिकमपि शुभदायि न भवतीत्यर्थ ॥ २० ॥

सकपटयतिं वर्णयतुमाह—

आक्रन्दु मुग्ध–मीमान् यहिंशपिशितवद् विस्मयमावृश्यं जैन ॥ २१ ॥

व्याख्या—'हा' इति कष्टे, अय जनो–लोक' शठै.–धूर्तयतिभिः वञ्च्यते–विप्रलभ्यते । किं विशिष्ट. ? श्रद्धालुः–विवेकविकल' धर्मेच्छावान्, क इव ? शाकि-न्यादिवशीकृत इव यथा शाकिन्यादिवशीकृतः कश्चिद् वञ्च्यत ॥ कैः ? यात्रास्नात्रा द्युपायैः, यात्रा–जिनयात्रा, स्नात्र–जिनस्नानम्, इत्यादय उपाया'–प्रकारास्तैः, न केवल यात्राद्युपायै., नमसितक–निशाजागरादिच्छलैश्, नमसितक–उपयाचितक " भवता मिदानीमीदृश उपद्रव. समुपस्थितस्तस्माद् भवद्भिस्तन्निवृत्तये जिनगोत्रशासनसुराणा

इयद् द्रव्यमेषणीय "मिति। निशाजागरादिच्छलैः—रात्रिजागरणादिव्याजैः किं कृत्वा वञ्च्यते? जैनबिम्बं आदर्श्य दर्शयित्वा, कोऽर्थः? जिनप्रतिमां दर्शयित्वा। न केवलं जिनप्रतिमां दर्शयित्वा तन्नाम्ना—जिननामधेयेन स्वेष्टसिद्ध्यै—आत्माभिमतनिष्पत्तये गृहान् कारयित्वा, कथम्भूतान् गृहान्? रम्यरूपान्—मनोहरान् किंवत् दर्शयित्वा? मुग्धमीनान् आक्रष्टुं वडिशपिशितवत्, यथा व्याधो बडिशे—मत्सवेधने पिशितं—मांसं विधाय मुग्धमीनान्—मुग्धान् मत्स्यान् आकर्षयति? हेयोपायोदेयविचारशून्यतया धर्म्म-श्रद्धालवस्तएव मत्स्यास्तान् ॥ २१ ॥

सर्वत्रास्थगिताश्रवाः स्वविषयव्यासक्तसर्वेन्द्रियाः ॥ २२ ॥

व्याख्या—कष्टमिति खेदेन उद्धतधियः—'नास्त्यस्मत् समो जगति संप्रति कश्चने'ति दर्पाध्मातबुद्धयः तुष्यन्ति—मोदन्ते, पुष्यन्ति—वर्द्धन्ते च, किं कृत्वा? सन्मुनि-मूर्द्धसु स्थित्वा—मुनिमस्तकेषु स्थितिं विधाय, किं विशिष्टाः? अन्त्याश्चर्यराजाश्रिताः—दशमाश्चर्यनृपानुगताः, यथा नीचा अपि केचन राजादेरवष्टम्भेन महतामपि मूर्द्धानमारुह्य पुष्यति। एवमेतेपि दशमाश्चर्यराजाश्रिता महामुनीन् परिभूय पुष्यन्तीत्यर्थः।

पुनः किं विशिष्टाः? सर्वाकृत्यकृतोऽपि—कोऽर्थः? लोकलोकोत्तरविरुद्धा—ब्रह्म-सेवनपुष्पफलाद्युपभोगाद्यसदाचारकारिणोऽपि सर्वमकृत्यं कुर्वन्तीत्यर्थः। सर्वत्रास्थ-गिताश्रवाः लोकसमक्षम् अनिरुद्धपञ्चाश्रवाः। पुनः किम्भूताः? स्वविषयव्यासक्त-सर्वेन्द्रियाः, स्वविषयेषु—स्पर्शादिषु व्यासक्तानि—विशेषणलग्नानि इन्द्रियाणि—त्वगा-दीनि येषां ते। पुनः किम्भूताः? वल्गद्गौरवचण्डदण्डतुरगाः, वल्गन्तः—यदृच्छया प्रसरंतः गौरवैः चंडाः—उत्कटाः, दंडाः—अकुशलमनोवाक्काया एव तुरगा येषां ते। पुनः किम्भूताः? पुष्यत् कषायोरगाः सुपुष्टक्रोधसर्प्पाः। एतावता पंचाश्रवविरमणं—पञ्चेन्द्रियनिग्रहं—दण्डत्रयविरति—कषायचतुष्टयजय—लक्षणसप्तदशविधसंयमविहीना अपि ते सत्साधूनतिक्रामन्ति, इति श्लोकार्थः॥

इदानीं दुष्टयतिभ्यो गृहस्था एव श्रेष्ठा इति दर्शयितुमाह—

सर्वारम्भ—परिग्रहस्य गृहिणोऽप्येकाशनाद्येकदा ॥ २३ ॥

व्याख्या—'सर्वारम्भ०' गृहिणोऽपि हृदि तीव्रानुतापो भवेत्। निष्ठुर-पश्चात्तापो जायते। किं विशिष्टस्य गृहिणः? न रक्षतः—न पालयतः, किम्? एका-

अनादि-एकभक्तादि, किं कृत्वा ? प्रत्याख्याय-नियम्य । क ? एकदा-अष्टम्यादि तिथिषु । यदि कश्चिद् गृहस्थः अष्टम्यादितिथिषु एकभक्तादेर्नियम गृह्णाति पश्चात् त-खण्डयति तस्य चेतसि महान् पश्चात्तापो भवतीत्यर्थः । किं विशिष्टस्य गृहिण. ? सर्वा रम्भस्य परिग्रहस्य-सकलपापव्यापारतत्परस्य सदा-सर्वदा, ये पुनः त्रिधा-मनोवाक्-कायारूपेण त्रिविध-कृतकारितानुमतिलक्षण पाप षट् कृत्वा-षड्वारान् प्रतिदिन-प्रति वासर प्रोच्यापि उक्त्वाऽपि भञ्जन्ति-खण्डयन्ति तेषाम् असाधूनां क तपः ? तपो नास्ति, सत्यवचन च नास्त्येव । ज्ञानिता-सिद्धान्तपरिच्छेत्तृत्व च नास्ति । व्रत दीक्षा च नास्तीत्यर्थः ॥ २३ ॥

देवार्थे-व्ययतो यथारुचिकृते सर्वर्तुरम्ये मठे ॥ २४ ॥

व्याख्या—' देवार्थ० ' अहो ! इति आश्चर्ये सितपटाः-श्वेताम्बराः कष्ट व्रत चरन्ति-दुष्कर चारित्र अनुतिष्ठन्ति । किंविशिष्टा ? साधुव्याजविटाः-यतिव्याजेन धूर्त्ता. । पुनः कथम्भूताः ? यथा रुचिकृते-स्वमनोभिलापरूपे मठे नित्यस्थाः सर्वदा मनोरमजिनगृहनिवासिन' । किं कुर्वन्तः ? देवार्थं व्ययतः-तद्देवद्रव्य व्यय कुर्वन्तः । कथम्भूते मठे ? सर्वर्तुरम्ये-सकलवसन्तादिऋतुमनोहरे । पुनः कथम्भूता ? शुचिपट्ट-तूलशयनाः-निर्मलपट्टवस्त्रयुत् तुलशयनाः कोमलशय्याशायिन इत्यर्थः । पुनः कथ-म्भूताः ? सद्गण्डिकायामनाः-कोमलगण्डिकायामनभाजः । पुनः कथम्भूताः ? सार-म्भाः आरम्भसहिताः । पुनः कथम्भूता' ? सपरिग्रहाः-धनधान्यादिभाण्डसग्रहपरायणा., सविषया'-विषयासक्तचेतसः सेर्ष्याः-सक्रोधाः । सकाङ्क्षाः सम्भोगविलासोत्कण्ठिताः, सदा-सर्वदा ॥ २४ ॥

इत्याद्युद्धतसोपहासवचस स्युः प्रेक्ष्य लोका स्थितिं ॥ २५ ॥

व्याख्या—' इत्याद्युद्धत० ' येषां मिथ्योक्त्या-मिथ्यात्ववचनेन सुदृशोऽपि सम्यग्ज्ञाना अपि मनो बिभ्रति-धारयति । कथम्भूत मन ? सन्देहदोलाचल इद समाचीन इद वा इति य सदेह' स एव दोला-हिन्डोलकस्तेन चञ्चल, ननु निश्चित सर्वथा जिनपथप्रत्यर्थिन., कोऽर्थः ? अर्हत्पथपराङ्मुखाः लोकाः-जना स्थितिम्-अना चाररूपां श्रुत्वा इत्याद्युद्धतसोपहासवचसः स्युः, कोऽर्थ' ? उक्तप्रकारेण सहास्यवचना भवेयुः-' अहो जैनाः अन्यथावादिनः अन्यथाकारिणः, अस्माकमेव दर्शन श्रेयः, इत्यादि वचनसन्दर्भेण, अतो हेतोः अभिमुखा अपि जनाः श्रुतपथात्-जिनसिद्धान्त

मार्गाद् वैमुख्यं-विमुखतां आतन्वते-विस्तारयंति । मिथ्यावादिनां मिथ्यावचनेन अभिमुखा अपि जना जिनमार्गाद् विमुखा भवन्ति, इति श्लोकार्थः ॥ २५ ॥

सर्वैरुत्कटकालकूटपटलैः सर्वैरपुण्योच्चयैः,

व्याख्या—'सर्वैरुत्कट०' ॥ २६ ॥ 'ततः' इति पश्चात् श्लोकस्यात्र वर्त्तते । ततो हेतोः-पश्चादुक्त हेतोः-अमुं-दुर्मार्गम् आसेदुषां-प्रस्थितानां मानसं नूनं निश्चितं एतैः क्रूरमकारि-क्रूरं कृतम् एतैं कैः ? सर्वैः उत्कटकालकूटपटलैः अत्युग्रविषसमूहैः न केवलं उत्कटकालकूटपटलैः सर्वैः अपुण्योच्चयैः-सकलपापराशिभिः, न केवलमेतैः सर्वैर्व्यालकुलैश्च-अशेषसर्पसमूहैः, न केवलमेतैः समस्तविधुराधिव्याधिदुष्टग्रहैः सकलदुःखमनोव्यथामङ्गलादिपापग्रहैः । कथम्भूतानां ? दौरात्म्येन-दुष्टाशयत्वेन जिनपथं निजन्धुषाम्-उच्छेतॄणां, पुनः कथम्भूतानाम् ? वचनेन इति ऊचुषाम्-अभिदधुषाम् ॥ २६ ॥

अतः—

दुर्भेद्यस्फुरदुग्रकुग्रहतमः स्तोमास्तधी चक्षुषां ॥ २७ ॥

व्याख्या—'दुर्भेद्यस्फुरदुग्र०' अतो हेतोः सदा-सर्वदा मिथ्याचारवतां-मोक्षमार्गविपरीताचारयुक्तानां वचांसि सकर्णः-सश्रवणः कथं कर्णे कुरुते ? कथं श्रवणे धारयति ? अपि तु न कथमपि इत्यर्थः । कथम्भूतानां मिथ्याचारवतां ? स्वयं नष्टानाम् पुनः कथम्भूतानाम् ? अन्यनाशनकृते-परनाशाय उद्योगमानां स्वयम् नष्टा परानपि नाशयन्तीत्यर्थः । पुनः कथंभूतानां ? 'महामोहाद्'घन-प्रचुरतरा-विवेकात् 'अहं मानिनां'-अहमेव, नान्यः इति मानिनां । पुनः कथम्भूतानां ? सिद्धान्तद्विषतां-जिनशास्त्रवैरिणाम् । पुनः कथम्भूतानां ? दुर्भेद्यस्फुरदुग्रकुग्रहतमःस्तोमास्तधीचक्षुषां-दुर्भेद्याः दुच्छेध्या स्फुरंतो-मनसि जाग्रद्रूपाः ये उग्रकुग्रहाः-जिनगृहनिवासादयस्त एव तमःस्तोमाः-अन्धकारपटलानि, तैरस्तं प्रापितं धीरेव चक्षुर्येषां तेषाम् ॥ २७ ॥

यत्किञ्चिद् वितथं यदप्यनुचितं यल्लोक-लोकोत्तरो ॥ २८ ॥

व्याख्या—'यत् किञ्चित्०' यत् कुधियः-कुबुद्धयः तत्तद्धर्म इति ब्रुवन्ति-अयमेव धर्म इति कथयन्ति तत् दुरन्त-दशमाश्चर्यस्य विस्फूर्जितं-विजृम्भितं, तत्, किं यत् किञ्चित् वितथं-अलीकं यदिति सामान्यतो निर्दिष्टं विशेषतोऽनिर्दिष्टनामा, यदप्यनुचितम्-अयोग्यं यल्लोकलोकोत्तरोत्तीर्णं-जिनमार्गाद् बहिर्भूतं जिनप्रवचनबाह्यं

जिनमार्गादतीतमित्यर्थः, यद्भणिना-देहिनां भवहेतुरेव येन समारबन्धो भवतीत्यर्थः, यत. शास्त्रबाधाकर-सिद्धान्तविरुद्धं न केवल धर्म्म इति कथयन्ति। अर्हन्मतभ्रान्त्या लान्ति च, कोऽर्थः ? जिनमार्गोऽयमिति मिथ्याज्ञानेन गृह्णन्ति च, कथम्भूतास्ते ? मूढाः ॥ २८ ॥

साम्प्रत मुग्ध जनान् प्रति स्वमत मोक्षपथतया दिशत, सत्पथगामिनश्च धार्मिकान् स्ववचनाननुरोधित्वेनाज्ञतया अवजानानस्य कस्यचिद्यथा छन्दाचार्य प्राम ण्योऽप्रस्तुत प्रशमया स्वरूपमाह—

कष्ट नष्टदिशा नृणां यदिदृशा जात्य-वैदेशिकः ॥ २९ ॥

व्याख्या—'कष्ट' दु खमेतन्नश्चेतसि वर्त्तते, यत्किमित्याह-यदिति वाक्योप क्षेपे, यन्नृणामदृशां जात्यन्धवैदेशिकः कान्तारेऽभीप्सितपुराध्वान प्रदिशतीति सम्बन्धः। तत्र 'नृणा' पुमा नष्टदृशां-अलोचनत्वात् कान्तारपातेन दिङ्मूढत्वाच्च प्रभ्रष्टप्राची प्रतीच्यादिककुपविभागपरिच्छेदानां, अदृशां-काचकामलादिना दृग्विकलानां, न तु जन्मान्धानां, जन्मान्धो जन्माभिव्याप्त्या लोचनरहितः। ननु सोऽपि तद्देशजात इतरेभ्यः श्रवणादिना विज्ञाय कथञ्चिदिष्टपुरपथ देक्ष्यतीति तत्रोक्त "वैदेशिक" इति, विदेशे-योजनशतव्यवहिते देशान्तरे जातो वर्द्धितश्चेति वैदेशिकः। नहि तद्देशस्वरूपमात्रस्या प्यनभिज्ञत्वात्कथ प्रकृतमार्गं जानीयादपि। तत. कर्मधारयः। कान्तारे' जनसञ्चार शून्ये दुर्गवर्त्मनि 'प्रदिशति' प्रतिपादयति अभीप्सितपुराध्वान-जिगमिषितनगरमार्गं, किलेति वार्त्तायां, उत्कन्धर.-उद्ग्रीव' कन्धरामुन्नमय्य भुजदण्डमुत्क्षिप्य कथयतीति-कष्टमेतत्। तु' पुनरर्थे, इद वक्ष्यमाण पुन कष्टतर-पूर्वस्मादपि कष्टान्महाकष्ट, यत् किमित्याह-'सोऽपि' प्रागुक्तो मार्गदेष्टा 'सुदृशो' निर्मलनयनानत एव 'सन्मार्गगान्' इष्टनगरसुगमपथप्रस्थितान् तद्विद.' सम्यक्सन्मार्गज्ञान् यत् हसति, सावज्ञमिति क्रिया विशेषण, सावहेल अज्ञानिव, यथा मार्गाभिज्ञा मार्गमुपदिशन्त उपहस्यन्ते लोकेन, तथैतेऽपि तेन। एव प्रस्तुतमुपमान योजयित्वा प्रस्तुतमुपमेयमिदानीं योज्यते, कष्टमेतत्-'यत् नृणां' सत्पथेच्छुपुरुषाणा नष्टदृशां-अतिमुग्धतया सत्पथकुपथविभा गानभिज्ञानात्, अदृशां-सम्यग्ज्ञानदर्शनविकलाना जात्यन्ध.-सिद्धान्तरहस्यलेशज्ञान भिज्ञ' सर्वथा अगीतार्थ., सोऽपि गीतार्थसत्वामादे. कथञ्चिन्मोक्षपथकथनप्रवीणः स्या दत्राह-वैदेशिको गर्हिताचारत्वाद् गीतार्थमुनिपुङ्गवसङ्गमात्रवर्जितः एव चाधुनिकदुस्सङ्घ प्रवरो निरङ्कु निषेधमपथप्रत्यर्थिमार्गकथनदीक्षितोऽय यथाछन्दशिरोमणिः कश्चिदा

चार्यो मन्तव्यः। कान्तारे-भवमहाटव्यां प्रदिशति अभीप्सितपुराध्यानं-मुक्तिमार्गं उत्कन्धरो-दर्शिताहङ्कारविकारः, तथा च सोऽगीतार्थः उन्मूत्रभापको मिथ्यादृष्टिः कथञ्चिदपि सत्पथं मोक्षमार्गं न वेत्ति, नाप्यन्येन गीतार्थेन प्रतिपादितोऽपि प्रत्येति इति कष्टं, एतत्कष्टतरं त्विति पूर्ववत्, सोऽपि प्रागभिहितो यथाच्छन्दाचार्यः सुदृशः-सम्यग्ज्ञानदर्शनयुजः सन्मार्गगान् ज्ञानदर्शनचारित्रलक्षणमुक्तिपथप्रवृत्तान् तद्विदो-मुक्तिमार्गविज्ञान् धार्मिकान् सुविहितसाधून् यत् हसति सावज्ञमज्ञानिव, यथा-कममी अगीतार्था मूर्खशिरोमणयः सिद्धान्तरहस्यं जानन्ति ?, अहमेव सकलश्रुतपारावारपारदृश्वा, ततो यमहं ब्रवीमि स मुक्तिमार्ग इति। किमित्येवमुपहसतीत्यत आह-तन्महाकष्टमित्युपमानोपमेययोस्तुल्यतया योजना। अत्र च मुग्धजनपुरतो निरङ्कुशं स्वकल्पितं चैत्यवासादिकमुत्सूत्रपथं प्रथयद्विधिविपयपारतन्त्र्यप्ररूपणानिपुणान्, सुगुरुसम्प्रदायानुवर्तिनः सुविहितानसूययोपहसन् सम्प्रति वर्तमानः कुसङ्घाचार्यवर्गोऽनया भङ्गया कविना प्रतिपादित इति वृत्तार्थः ॥ २९ ॥

साम्प्रतं श्रुतपथावज्ञाद्वारमुपसञ्जिहीर्षुः शुद्धजिनमार्गस्य दुष्टोपचितसमुदितकारणकलापेन सम्प्रति दुर्लभत्वं प्रतिपादयन्नाह—

सैषा हुण्डावसर्पिण्यनुसमयहसद्भव्यभावानुभावा ॥ ३० ॥

व्याख्या—'सैषा हुण्डा'॥ एवं अमुना प्रकारेण अनुकूलं-प्रतिसमयं दुष्टेषु-क्रूरेषु पुष्टेषु सत्सु जैनमार्गो दुर्लभः-अर्हत्पथो दुष्प्राप्यः, यदा तु क्रूराः पुष्टास्तदा जैनमार्गो दुर्लभो जात इत्यर्थः। एवं कथं ? सैषा हुण्डानाम्नी अवसर्पिणी-कालविशेषः। कथम्भूता- अवसर्पिणी ? अनुसमयं ह्रसद्भव्यभावानुभावा, अनुसमयं-प्रतिसमयं प्रतिक्षणं ह्रसन्-हीयमानः भव्यजनानां शुभभावस्यानुभावः-प्रभावो यस्यां सा। अयं त्रिंशत् उग्रग्रहश्च।

जिनसिद्धान्तोक्ताष्टाशीतिग्रहमध्यात् त्रिंशतः पूरणो भस्मराशिः, कथम्भूतो भस्मराशिः ? ख-ख-नखमितिवर्षस्थितिः "पश्चानुपूर्व्या अंकरचना ज्ञातव्या"। खं-शून्यं, तत्पश्चात् पुनः खं-शून्यं, तत् पश्चान्नखं-विंशतेरंकः एतावत् (२०००) स्थितिः। अन्त्यदशममाश्चर्यं च असंयतपूजाऽनाचारप्रतिपादकमाश्चर्यं च तत्समा दुष्षमा च तैरेव-सर्प्पिणीभस्मराशिदशमाश्चर्यैः समा तत्समा दुपमा दुःखकारिणी, तस्यै जिनमतहतये-जिनमर्गोच्छेदनिमित्तं यद्येते तुष्टास्तदा जैनमार्गो दुर्लभ इत्यर्थः॥३०॥

एवं तावदष्टादशवृत्तैः प्रबन्धेन लिङ्गिनां श्रुतपथावज्ञा प्रतिपादिता। संप्रति 'गुणद्वेषधी' रिति द्वारं निराकुर्वंस्तेषां गुणद्वेषं दर्शयन्नाह—

सम्यग्मार्गपुष प्रशान्तवपुष प्रीत्योल्लसच्चक्षुष ॥ ३१ ॥

व्याख्या—'सम्यग्मार्गपुषः०'॥ उद्यद्रूपः-प्रचण्डक्रोधा' मत्साधून् सुविहितयतीन् न क्षाम्यन्ति-न सहन्ते। किंविशिष्टान् सत्साधून्? सम्यङ्मार्गपुष – ज्ञानादित्रयस्य मोक्षपथो[स्य]विस्तारकान् सम्यग्ज्ञान-सम्यग्दर्शन सम्यक्चारित्रपथ, पोषकान्। पुनः किंविशिष्टान्? प्रशान्तवपुषः-रागद्वेषादिरहितशरीरयुक्तान्। पुनः किंविशिष्टान्? प्रीत्योल्लसचक्षुषः-प्रसन्नोत्फल्लनयनान् सर्वत्र सदयावलोकिन इत्यर्थः। पुनः किंविशिष्टान्? श्रामण्यर्द्धिमुपेयुषः-पञ्चमहाव्रतसम्पत्ति आसेदुषः-पञ्चमहाव्रतानि-प्राणातिपात-मृषावादा-दत्तादान-मैथुन-परिग्रहाणा त्यागस्तस्य सम्पत्ति उपगतानि-इत्यर्थः। पुनः किम्भूतान्? स्मयमुष-निरहङ्कारिणः। पुन किम्भूतान्? कन्दर्पकक्ष प्लुषः-मन्मथशुष्कतृणदाहिनः। पुनः किम्भूतान्? सिद्धान्ताध्वनि तस्थुषः-जिनोक्त सम्यग्मार्गे स्थितान् तत्परानित्यर्थः। पुनः किम्भूतान्? शमजुषः-शान्तियुक्तान् पुनः किम्भूतान्? सत्पूज्यता जग्मुषः-विवेकजनाराध्यत्व प्रापितान्। एव गुणविशिष्टानपि सद्यतीन् उद्यद्रूप-प्रबलकोपाः न क्षाम्यति- न सहन्ते इत्यर्थ. ॥ ३१ ॥

देवीयत्युरुदोषिण क्षतमहादोषानदेवीयति ॥ ३२ ॥

व्याख्या—'देवीयत्यु०' 'अहो' इत्याश्चर्यं जनो-लोकः अगुणाग्रण्य अगुणभण्डार स्व-आत्मान कृतार्थीयति-कृतार्थमिवाचरति-आत्मान विहितसकल-कर्त्तव्यमिवाचरति, कथम्भूतो जनः? मिथ्यात्वग्रहिलः-प्रबलमिथ्यात्वगम्भीर प्रच ण्डमिथ्यात्वाभिनिवेशग्रहग्रहीतः। पुन' किं करोति? उरुदोषिण -प्रचुरापराधान् देवी यति-देवानिवाचरति, ये प्रबलदोषास्तान्। देवान्-जिनसदृशान् मन्यत इत्यर्थः। पुनः किं करोति? क्षतमहादोषान् प्रणष्टप्रचुरापराधान् अदेवीयति-अदेवान् इवाचरति। पुन' किं करोति? मूर्खमुख्यनिवह-महामूर्खसमूह सर्वज्ञीयति-सर्वज्ञमिवाचरति। पुन. किं करोति? तत्त्वज्ञम् अज्ञीयति-षड्दर्शनवेत्तार मूर्खमिवाचरति। पुनः किं करोति? जैनमार्गम् उन्मार्गीयति-कुमार्गमिवाचरति। पुनः किं करोति? अपथ-अ-मार्ग सम्यक्-पथीयति-सन्मार्गमिवाचरति। एतावता सर्वमेव विपरीताचरणमाचरती-त्यर्थः ॥ ३२ ॥

ये केचन दुष्टयतिनो मुक्तमिवात्मान मन्यन्ते तान् दूषयितुमाह—

सङ्घत्राकृतचैत्यकूटपतितस्यान्तस्तरा ताम्यत ॥ ३३ ॥

व्याख्या—'सङ्घत्राकृ०' जन्तुहरिणमात्रस्य कुतो मोक्ष.? जन्तव एव

हरिणाः, तेषां समूहस्य कुतो मोक्षः—कुतो निर्वाणम्? कथम्भूतस्य जन्तु हरिणव्रातस्य? सङ्घव्याघ्रवशस्य उत्सूत्र प्रज्ञापकः स्वच्छन्दचारी विषयलोलुपः साधु—साध्वी—श्रावक-श्राविकासमवायो भूयानिह सङ्घ उच्यते, स एव व्याघ्रः, यथा व्याघ्रा यत्तस्य हरिण-व्रातस्य मोक्षः छुटनं न भवति तथैवेति। पुनः कथम्भूतस्य? सङ्घेन—श्रावकलोकेन कृतचैत्यकूटपतितस्य भक्त्या तदायत्ती कृतानि जिनगृहाणि, एतान्येव कूटाः मृगबंधन-यन्त्रविशेषास्तेषु प्रतिबद्धस्य। पुनः किं विशिष्टस्य? अन्तस्तरां चेतोमर्मणि ताम्यतः खिद्यमानस्य मृगोऽपि बद्धः सन् चेतोमर्मण्यतितरां खिद्यति पुनः किं विशिष्टस्य? सन्मुद्रादृढपाशबन्धनवतः सन्—तस्य सङ्घस्य मुद्रा चतुर्दश्यादिपर्वतिथयस्ता एव दृढ-पाशाः, तैर्बन्धनं, तद्युक्तस्य। अत एव स्पन्दितुं—चलितुं अपि न शक्तस्य—न समर्थस्य। पुनः कथम्भूतस्य मुक्त्यै—मोक्षार्थं कल्पितदानशीलतपसः—विहितदेशचारित्रानशना-देरपि। एतत्क्रमस्थायिनः—एतस्य—सङ्घस्य क्रमो—रात्रिस्नात्रादिका परिपाटी तद्वर्तिनः। एतावद्—बन्धनयुक्तस्य तत्रापि संघसार्दूलवशस्य जन्तु—हरिणव्रातस्य कुतो मोक्ष? न कुतोऽपीत्यर्थः ॥ ३३ ॥

इत्थं मिथ्यापथकथनया तथ्ययाऽपीह कश्चित् ॥ ३४ ॥

व्याख्या—'इत्थं मिथ्या०' ॥ इह—लोके इदं अनुचितं—अयोग्यं कश्चिन्मा-ज्ञासीत्। इदं जिनवल्लभे—नोक्तं संघपट्टाख्यं अनुचिमिति मा कश्चिन्मस्त कथा? इत्थं—पूर्वोक्तप्रकारेण मिथ्यापथकथनया—दिगम्बरोक्तमिथ्यापथप्रकथनया। कथम्भूतया? तथ्ययापि—सत्ययापि। अथानन्तरं कश्चिन् मा कुपत्—मा क्रोधं कार्षीत्। अथ यद्येवं मिथ्यापथकथनेन परेषां क्रोधशङ्का तदासौ न कथनीय एवेत्याह—'यस्मा'दिति यस्मात् कारणादेतत् किमपि दिग्मात्रं कृपया—अनुकंपया कल्पितं—सकृत—जल्पितं च—अतिशयेनोक्तं च। किं कृत्वा? नॄन्—मानवान् प्रेक्ष्य—अवलोक्य। कथम्भूतान् नॄन्? जैनभ्रान्त्या—'अयं जैनमार्गः' इति मिथ्याज्ञानेन कुपथपतितान्—कुमार्गप्रस्थितान् कस्मै कल्पितं? तत्प्रमोहापोहाय—तेषां नृणां प्रचण्डमोहनाशाय। यथाऽमी मूढाः कुपथः स्वरूपं विज्ञाय तत्परित्यागेन सत्पथं गृहीत्वा संसारसागरं तरिष्यन्तीति कृपया जल्पितमित्यर्थः ॥ ३४ ॥

किमपि दिग्मात्रं जल्पितम्? इति कथमुक्तं यावता सकलमेव कथं नोक्त—मिति—अतः आह—

प्रोद्भूतेऽनन्तकालात् कलिमलनिलये नाम नेपथ्यतोऽर्हन् ॥ ३५ ॥

व्याख्या—प्रोद्भूत० यः कश्चित् नृषु-मनुष्येषु कुबोध निरसिसिषु सन् कुदेश-नोत्पादित दूरीकर्त्तुमनाः सन् दुरध्वे-कुमार्गे दोपसख्यां निवमेत्-'कुमार्गे एतावत्-सख्या को दोषः' इति वक्तुमिच्छेत् स पुमान् अम्भोऽम्भोघे. प्रमित्सेत्-प्रमातुमिच्छेत्। चेति पक्षान्तर सकलगगनोल्लङ्घन विधित्सेत्-सकलाकाशस्यातिक्रमणमिच्छेत्। योऽम्भोऽम्भोधेरवगाहते, यश्च समस्तगगनस्योल्लङ्घन करोति सकुमार्गे दोपसख्यां वदति, अतो दिग्मात्र जल्पितमित्युक्त, तस्मात् कुबोध निरसिसिषु' कारुण्यात्-' माऽमी ससारसागर ब्रुडन्तु ' इति कृपात. कथम्भूते दुरध्वे? अनन्तकालात् प्रोद्भूते-अनन्तवर्षमासादिहेतुना सञ्जाते, कलिमलनिलये-दुःखमहापातकनिवासे। पुन कथम्भूते? नाम नेपथ्यतः-नाममात्राचरणतः अर्हन्मार्गभ्रान्ति-तात्त्विकजिनमार्गसादृश्य दधाने-बिभ्राणे। पुनः किम्भूते दुरध्वे? तत्त्वत'-परमार्थत' तदभिसरे-अर्हन्मार्गघातक यथा अभिसरा. प्रच्छन्न घातका, स्ववेषेण राजादिक हन्तुमशक्नुवन्तो वेषपरिवर्त्तन कृत्वा राजादिक निघ्नन्ती तथा-एतेऽपि गृहस्थवेषेणार्हन्मार्गोच्छेद कर्त्तुमपारयतो यति-वेषेणोच्छेदयन्तीत्यर्थः ॥ ३५ ॥

न सावद्याम्नाया न बकुश-कुशीलोचितयति, ॥ ३६ ॥

व्याख्या—तथा 'न सावद्या०' इह-प्रवचन एते यतय-साधवः अद्यापि दु षमा कालेऽपि सुव्रतय. स्युः-सिद्धान्ताध्ययनाध्यापन-व्याख्यान-श्रवणपरायणा. भवेयु। किम्भूता? येन सावद्याम्नायाः न सपापसम्प्रदाया.। पुनः किम्भूता.? न बकुशकुशीलो चित यति-क्रियायुक्ताः बकुश शबलमतिचारेण समल प्रक्रमाच्चारित्र, तथा कुत्सित चरण येषां, तेषामुचिता-योग्या[क्रिया]साधु-सामाचारी तया न युक्ता-न सहिता., कुत्सितयति क्रियारहिता इत्यर्थ.। पुन किंविशिष्टाः? मदममताजीवनभयै.-न युक्ता.-नात्यादि मदममता-गृहस्थादिषु जीविकानिर्वाहस्तस्माद् भय येषां त तादृशा न। पुन. किं विशिष्टाः? न सक्लेशावशा-न रौद्राध्यवसायोत्कर्षा., पुन किं भूता 'न कदभि निवेशाः' न कुत्सितमानसा प्रहवन्ता, पुन. कथ भूता? न कपटप्रिया. न माया-वल्लभा:, एतावता दु षमाकालप्रभावाद् अन्यत्कर्त्तुमपारयत इत्यर्थ ॥ ३६ ॥

सविग्नाः सोपदेशा श्रुतनिकषविद क्षेत्र-कालाद्यपेक्षा ॥ ३७ ॥

व्याख्या—'सविग्नाः सो०' अस्मिन्-जिनशासन सत्साधवः-सुविहित मुनय' धन्या.। किंविशिष्टाः सत्साधव? सविग्नाः-निर्वाणेच्छव। पुन. किंविशिष्टा.?

सोपदेशाः-धर्मोपदेशतत्पराः। पुनः किंविशिष्टाः ? श्रुतनिकषविदः-शास्त्ररहस्य निपुणाः पुनः किम्भूताः क्षेत्रकालाद्यपेक्षानुष्ठानाः-देशकालानुसारेण विहारादिक्रियारम्भिणः। पुनः किंविशिष्टा ? शुद्धमार्गप्रकटनपटवः-यथार्थश्रुतपथप्रकाशनदक्षाः यथार्थमेव शास्त्र-पथं प्रकाशयन्तीत्यर्थः। पुनः किंविशिष्टाः ? प्रास्तमिथ्याप्रवादाः-दूरीकृतमिथ्या शास्त्रोक्तयः। पुनः किम्भूताः ? नियमशमदमेत्यादि-नियमो-द्रव्याद्यग्रहः, शमः-कषायनिग्रहः,-दम-इन्द्रियदमनं औचित्यं-सर्वत्र योग्यतानुसारेण विनयादि प्रयोक्तृत्वं, गाम्भीर्यं-अलक्षहर्षादिविकारत्वं, धैर्यं-विपत्सु अपि अविखिन्नत्वं चेतसोऽवैक्लव्यं, स्थैर्यं-विचार्य करणीयकारित्वं, औदार्यं-विनयादिनाऽध्यापनवितरणं, आर्यचर्या-सत्पुरुष-क्रमप्रवृत्तिता, विनयः-अभ्युत्थानादिना गुरुषु प्रतिपत्तिः, नयो-लोक लोकोत्तराविरुद्ध-वर्तित्वं, दया-दुःस्थितादिदर्शना[ दा ]र्दन्त -[ करणत्वं ] इति दाक्ष्यं-धर्मक्रियासु नालस्यं, दाक्षिण्यं-सरलचित्तता, ततो द्वन्द्वसमासः, एभिर्गुणैः पुण्याः पवित्राः। ईदृशाः साधवो वन्दनीया इत्यर्थः ॥ ३७ ॥

सांप्रत प्रकरणकारः प्रकरणं समाप्नुवन्-इष्टदेवता-व्याजेनावसानमङ्गलं, स चायं चक्रबन्धेन स्वनामधेयमाविर्भावयितुमाह—

विभ्राजिष्णुमगर्वमस्मरमनासादं श्रुतोल्लङ्घने ॥ ३८ ॥

व्याख्या—अहं जिनं वन्दे-तीर्थङ्करं नमस्करोमि। किम्भूतं ? विभ्राजिष्णुं-अत्यन्तं विराजमानम्। पुनः किम्भूतं ? अगर्वं-गर्व रहितं। पुनः किम्भूतं ? अस्मरं-जितकन्दर्पं। पुनः किम्भूतं ? अनासादम्-अवसन्नताशून्यम्। पुनः किम्भूतं ? श्रुतोल्लङ्घने सद्ज्ञानद्युमणि-शास्त्रोल्लङ्घने केवलज्ञानसूर्यं। पुनःकथम्भूतं ? वरवपुःश्रीचन्द्रिकामेधरं-श्रेष्ठशरीर-कार्तिक-कौमुदीनक्षत्रनाथं, पुनः किम्भूतं ? वर्ण्यं-स्तुत्यं, कथम् ? अनेकधा-बहुधा, कैः ? असुर-नरैः-दैत्यमनुजैः, न केवलदैत्यमनुष्यैः शक्रेण च-इन्द्रेण च। पुनः कथम्भूतं ? एनच्छिदं-पापछेत्तारं। पुनः कथम्भूतं ? विदुषां-पण्डितानां दम्भारिं-पापण्डशत्रुं, पुनः कथम्भूतं ? सदा-सर्वदा एकान्तरङ्गप्रदं, केन ? सुवचसा-मधुरगिरा सदसन्नित्यादिरूपतया अनेकान्त-रङ्गप्रदातारम्। अत्र श्लोके सयत्नेन चक्रबन्ध उद्भावनीयः ॥ ३८ ॥ चक्रमिदमासन्नम् ॥

जिनपतिमतदुर्गे कालतः साधुवेषैः, ॥ ३९ ॥

व्याख्या—'जिनपतिमतदुर्गे०' अधुना-इदानीं तैर्विषयिभिः इयं स्वगच्छ-स्थितिः अप्रथि विस्तारिता। कस्मै ? स्वार्थसिद्ध्यै-निजकार्यनिष्पत्तये, केवलं स्ववश-

जनजडानां श्रृङ्खलेव आत्माऽऽयत्ती कृता ये मूर्खजनाः तेषां बन्धनाय श्रृङ्खलेव-निगड इव। कस्मिन् सति? साधुवेषैः-धूर्तैः जिनपतिमतदुर्गे-अर्हच्छासनप्राकारे अभिभूते सति, अर्हच्छासनमेव दुर्गं प्राकारः "कोट" इति भाषया तस्मिन् विषयिभिः-कामिभिः उपद्रुते सति यदा भगवच्छासनमेव दुर्गं प्रकारः धूर्तैः उपद्रुत तदा ते धूर्ताः इव गच्छ स्थिति' निजगच्छ-मुद्रा विस्तारितेत्यर्थः। कुत अभिभूते सति? कालतः दुःषमाकाल-दोषात्। कैः? भस्मकम्लेच्छसैन्यैः, यथा म्लेच्छसैन्य कस्मिंश्चिदपि दुर्गे स्वभुजबलेन गृहीते द्रव्यार्थं तदन्तर्वर्तिनागरिकलोकबन्धनाय श्रृङ्खला प्रसारयति च तथा लिङ्गिन स्वकार्यार्थं मूर्खजनबन्धनाय गच्छस्थितिं प्रसारितवन्त इत्यर्थः॥ ३९॥

सम्प्रत्यप्रतिमे कुमहवपुषि प्रोज्जृम्भिते भस्मक॥ ४०॥

व्याख्या 'सम्प्रत्य—प्रतिमे०'॥ इत्थ-अनुना प्रकारेण लोकैः वय कदर्थयामहे-उपहस्यामहे। कया? सदागमस्य कथयापि-शुद्धसिद्धान्तधर्मस्य देशनाविचारमात्रेणापि। किं कृत्वा? एकीभूय-एकमतं कृत्वा। कथम्भूतैः लोकैः? तदाज्ञापरैः-मोहराजाज्ञापरैः। कस्मिन् सति? मोहराजकटके प्रौढिं जग्मुषि सति, कोऽर्थः? मिथ्याज्ञान राजसैन्ये प्रौढतां याति सति। न केवल मोहराजकटके प्रौढिं जग्मुषि सति प्रागुक्तकुमह शरीरे प्रोज्जृम्भिते सति-अभ्युदये सति, पुनः कस्मिन् सति? दुरन्तदशमाश्चर्यम्-असंयतपूजालक्षणम्, तस्मिन् विस्फूर्जति सति। कुमहवपुषि। किम्भूते? सम्प्रति-अधुना अप्रतिमे-असदृशे कथम्भूते दशमाश्चर्ये? भस्मकम्लेच्छातुच्छबले-भस्मराशितुच्छाधिपतिसैन्यैः-भस्मको भस्मराशिग्रहः, स एवार्हच्छासनरतानामेकबाधाविधायित्वात् म्लेच्छाः-तुरुकास्तेषां सैन्यैः। यथा कश्चिन्महाराजाधिराजो म्लेच्छमहासामन्तैर्भूमण्डलं साधयति तथा अयमपि मोहराजा भस्मकादिभिर्जिनशासनमतिलङ्घयतीत्यर्थः॥ ४०॥

## वृत्तिकार-प्रशस्ति।

क्व जिनवल्लभसूरिसरस्वती, क्व च शिशोर्मम वाग्विभवोऽस्य।
गुरुवचोवरिमा सुजना खलु, सकृपयो कृपुकान् प्रकरिष्यथ॥ १॥

श्रीवीरदास इति वीरजिनेश्वरस्य, पादाब्जपूजनपरायणचित्तवृत्तिः।
श्रीमानभूदमलकीर्तिवितानकेन, येनावृता जगदिदं कदगारमकेर॥ २॥

तस्यात्मजोऽभवदवात्तगुणा मसम-सम्यक्त्वसंपदविवर्द्धितपुण्यराशिः।
श्रीमन् हमीर इति धीरतर शरीर, वाक् कर्महृद्भिरनिशं जिनपूजनाय॥ ३॥

तत्पुत्रोऽतिपवित्रकर्मनिरतः सद्विद्यया सर्वतः,
ख्यातः षोडशहायनोऽप्यरचयत् टीकां स्फुटार्थाभिधाम् ।
लक्ष्मीसेन इति प्रसिद्धमहिमा देवान् गुरूनर्चयन्,
जीयाज्जीवदयापरः परपरीतापाऽर्तिहन्ता वरः ॥ ४ ॥

" अथ समर्थना—

विमले श्रावणमासे, वर्षे त्रि–महिषु–चन्द्र–( १५१३ ) संगुणिते ।
कृतवान् लक्ष्मीसेन,–टीकां श्रीसङ्घपट्टस्य " ॥ ५ ॥ ग्रथांक ५०१ ॥

॥ इति श्रीलक्ष्मीसेनकृता श्रीसङ्घपट्टकटीका सम्पूर्णा ॥

अर्हम् नमः ।

श्रीजिनवल्लभसूरिविरचित

श्रीहर्षराजोपाध्यायविहितलघुवृत्तियुत

# श्रीसंघपट्टकः

वन्दे शान्तिजिन शान्ति-कर कर्मोत्करोज्झितम् ।
महोदयेन्दिरोदारं, विघ्नसङ्घावघातकम् ॥ १ ॥

भित्त्वा दुष्कर्मदुर्गं शमदमबलतः साधिकद्वादशाब्दै-
र्लेभे तीर्थङ्करश्री सदतिशयवती लीलया येन नूभ्य ।
भक्तेभ्यश्च प्रदत्ता स सुरमणिरहो ! ' इष्टदस्त्व हि सार्व-
स्तेनाल मा कुरुष्व स्वविमलकमलालङ्कृत वर्द्धमानः ॥ २ ॥

जिनवल्लभसूरीन्द्रैः, कृत श्रीसङ्घपट्टकः । तद् व्याख्यामल्पधी कुर्वे, वृहट्टीकाऽनुसारतः ॥३॥

व्याख्या—अथ 'सङ्घपट्ट[क]' इति क शब्दार्थ' ?, उच्यते—'सङ्घस्य' ज्ञानादिगुणसमुदायरूपस्य—साध्वादेश्चतुर्विधस्य 'पट्टको' व्यवस्थापत्र, यथा राजादयः स्वनियोगिभ्यो व्यवस्थापत्र प्रयच्छन्ति 'अनया व्यवस्थया युष्माभिर्व्य वहर्त्तव्य'-मिति, एवमिहापि साक्षाद्विपक्षदोपदर्शनद्वारेण स्वपक्षसुसङ्घस्य व्यवस्था वक्ष्यमाणा दर्शयत इति सङ्घपट्टकः । तत्रादि-वृत्तम्—

वह्निज्वालावलीढ कुपथमथनधीर्मातुरस्तोकलोक ॥ १ ॥

व्याख्या—'स्तुमः' प्रणुमः, अस्मत् य-प्रयुज्यमानेऽप्युत्तमपुरुषप्रयोगकथना द्वयमिति कर्तृपद स्वयमिह ज्ञेय, क ? देव, दीव्यते-स्तूयते शक्रादिभिरिति देवः स चात्र प्रकरणात्-अभिष्टदेवतात्वेन स्वनाईत्वाज्जिनः, सोऽपीह कमठतपोदुष्टतापदहनलक्षणा साधारणविशेष[ण]योगात्पार्श्वनाथः । त देव स्तुमः, यो'जगादेव' प्रतिपादयामासेव । इव शब्दो[ऽत्र उ]त्प्रेक्षाद्योतक' । किं ? इति तदेवाह-विधुरमित्यादि । 'प्राज्ञैः' प्रेक्षावद्भिः 'कार्यं' विधेय 'कुपथस्खलन' सर्वसामर्थ्येन पूर्वापराऽविसवादिशास्त्रविरुद्धमतनिराकरण ।

किं कृत्वा ? 'प्रपद्य' अङ्गीकृत्य, किं ? 'विधुरमपि–व्यसनमपि। अपिः सम्भावने, एतत्सम्भावयति सति सामर्थ्ये स्वापायशङ्कया कुपथस्खलनाऽवधीरणं त्वनन्तजीवसंसार-कारणत्वेन महतेऽनर्थायेति। कस्य विधुरं ? 'स्वस्य' आत्मनः कथं ? मध्यस्ततत्क्षणात्। किलेत्याप्तवादे। कस्मादेवं जगादेव ? इत्यत आह–कारुण्यामृताब्धिः–'कथमयं जनो मया कुमार्गपथादुद्धरणीयः' इति कृपापीयूषसागरो भगवान्। नहि लोककृपां विना कश्चित्स्वकष्टमङ्गीकरोति। किं कुर्वाण एवं जगादेव ? इत्यत आह–'स्पष्टयन्' प्रकटी-कुर्वन्, किं ? कमठमुनितपः–कमठाभिधान–लौकिक–तपस्वि–पञ्चाग्निरूप–कष्टानुष्ठाता 'दुष्टं' प्राणिवध–लाभ–पूजा–ख्यातिकामनादिदोषयुक्तं। कथं दुष्टं ? उच्चैरतिशयेन। किं कृत्वा ? 'सन्दर्श्य' दर्शयित्वा, कं ? 'नागं' पञ्चाग्नितपोनिमित्तज्वलिताग्निकुण्डान्तर्वर्त्ति-काष्ठकोटरमध्यगं भुजङ्गं। किं विशिष्टं ? 'वह्निज्वालावलीढं' निरन्तरं प्रज्वलद्वह्निज्वाला-व्याप्तं अर्द्धदग्धमिति यावत्। क्व ? 'अग्रे' पुरतः, कस्याः ? 'मातुः' स्वजनन्याः, न केवलं मातुः, तथा समस्तलोकस्य। कस्मात्सकलजनमध्ये भगवांस्तत्तपस्तिरश्चकार ? यतः 'कुपथमथनधीः' असन्मार्गोच्छेददक्षः। एवं ज्ञानबल–ज्ञातकमठविधास्यमानजलधर-धारासम्पातादिस्वापायाभ्युपगमेनापि कमठतपसो दुष्टत्वं स्पष्टयताऽर्थादेतत्प्रत्यपादि-यत् मद् वद् भवद्भिरपि कुमार्गस्खलनं स्वकष्टाङ्गीकारेणापि कार्यमिति वृत्तार्थः ॥ १ ॥

तदेवमिष्टदेवतास्तवमभिधाय–इदानीं सङ्घव्यवस्थोपदेशतत्त्वं कथनीयं, तच्च योग्यपुरुषस्य प्रतिपाद्यमानं साफल्यमासादयेत्, तेनोपदेशरहस्यभणनयोग्यं श्रोतारं निरूपयितुमाह—

कल्याणाभिनिवेशवानिति गुणग्राहीति मिथ्यापथ ॥ २ ॥

**व्याख्या**—'**उच्यसे**' उपदिश्यसे, त्वमिति युष्मदो श्रोतृनिर्देशः, मयेति कर्त्तुरात्मनिर्देशः। ततश्च भोः श्रोतः! मया त्वं सङ्घव्यवस्थां प्रतिपाद्यसे इत्यर्थः। कस्माद् ? इत्याह–कल्याणाभिनिवेशवानिति। इति शब्दा अत्र सर्वेऽपि हेत्वर्थाः। कल्याणः–शुभोऽभिनिवेशः–आग्रहः, सद्ग्रह इत्यर्थः, तद्वान्, सद्ग्राहिणो हि सदुपदेश-रत्नश्रवणे परमानन्दः समुल्लसति १। तथा गुणग्राहीति–अल्पीयसोऽपि गुणस्य ग्रहण-प्रवणः, दोषैकग्राहिणो हि अविद्यमानेऽपि दोषे तद्ग्राहकत्वमेव स्यात् २। तथा मिथ्या-पथप्रत्यर्थीति, मिथ्यापथो वक्ष्यमाणो यथाछन्दप्ररूपितोत्सूत्रमार्गः तस्य 'प्रत्यर्थी' विरोधी, उत्सूत्रमार्गं श्रोतुमप्यनिच्छुः, उत्सूत्रपथाभिलाषुकस्य यथार्थसिद्धान्तोपदे-शस्त्रासाय स्यात् ३। तथा विनीत इति गुर्वादिष्वभ्युत्थानादि करणलालसः, विनीतायैव

गुरवः सिद्धान्ततत्त्वं कथयन्ति ४। तथा अशठ इति-ऋजुस्वभावः, गुर्वादिषु जीविका (निहि. ति) निरपेक्षप्रवृत्तिरित्यर्थः, शठो हि न विद्यायोग्यः ५। तथा औचित्यकारीति च-लोकागमाविरोधेन गुर्वादिषु यथानुरूपं विनयादिप्रवृत्तिरौचित्यं, तत्करणशीलः, औचित्य-हीनस्य शेषगुणाः सन्तोऽपि काशकुसुमसङ्काशाः ६। तथा दाक्षिण्यीति, दाक्षिण्य-मनुकूलता-जनचित्तानुवर्तित्वं, तद्वान्, निर्दाक्षिण्यो हि बन्धूनामप्युद्वेगकृत् ७। तथा दमिति-जितेन्द्रियः, अजितेन्द्रियो हि गुरुसेवायामपि मन्दायते ८। तथा नीतिभृदिति-सदाचारपरायणः, तद्वतो हि मर्त्येऽपि माहात्म्यं भजन्ते [सद्वृत्ते] ९। तथा स्थैर्यीति, स्थैर्यं-कार्यारम्भेऽनौत्सुक्यं, तद्वान्, उत्सुका हि रामस्येव कार्यमारभमाणाः शास्तारमप्युद्वेजयन्ति १०। तथा धैर्यीति, धैर्यं-आपत्स्वपि मनसोऽक्षोभ्यत्वं, तद्वान्, अधीरोऽपि विघ्नाकुलितचेता गुरुमपि हीलयति ११। तथा सद्धर्मार्थीति, स[त्]न(?)-शोभनो धर्मो लोकप्रवाहरहित आज्ञानुगतः शुद्धो मार्गः, तस्यार्थी-गवेषकः १२। तथा विवेकवानिति, पारिणामिकया बुद्ध्या युक्तायुक्तविमर्शो विवेकः, तद्वान् १३। तथा सुधीरिति, सुधीः-प्राज्ञः, अज्ञे हि वक्ताऽपि गुरुर्न किञ्चित्संस्कारमाधातुमिष्टे १४। तदेवं पूर्वोदित सकलगुणग्रामसम्पन्नः स्व भोः श्रोतः!, ततो मयोपदेशसर्वस्वं श्राव्यसे इति वृत्तार्थः ॥२॥

इदानीं योग्यश्रोतारं प्रति यदकृत्यं तत्प्रस्तावनामारचयितुं वृत्तद्वयमाह—

इह किल कलिकालव्यालवक्त्रान्तराल ॥ ३ ॥
प्रोत्सर्पद्भस्मराशिग्रहसरदशमाश्चर्यसाम्राज्यपुष्यन् ॥ ४ ॥

व्याख्या—एवं विधे प्राणिवर्गे सति साधुवेषैः सोऽयं 'पन्थाः' मार्गः अप्रथीति सम्बन्धः। 'अतानि' विस्तारितः, कोऽसौ? 'पन्थाः' स्वेच्छाकल्पितं मतं 'स' इति सकलजनप्रसिद्धः 'अय'मिति इदानीं प्रत्यक्षोपलक्ष्यमाणः। कथमप्रथि? 'अभितः' समन्ताद् भूरिदेशेष्वित्यर्थः। कैः? साधुवेषैः, साधोः सुविहितस्येव वपो-रजोहरणादि नेपथ्यं, न त्वाचारो, येषां ते तथा, तैः, सन्मुनिलिङ्गमात्रधारिभिः। कुत एतदित्याह-विषयिभिः, विषयन्ति-समारगुप्तौ बध्नन्ति आसेविनं प्राणिनमिति विषयाः-शब्दादयः तद्वद्भिः, विषयासक्तो हि यतीनां दीक्षया विरुध्यते। किंरूपः पन्थाः? [जिनोक्तिप्रत्यर्थी] जिनानामुक्ति-र्वचनमागमः तस्य 'प्रत्यर्थी' विरोधी। कस्मादेवं विधः पन्थाः प्रथितस्तैः सङ्क्लिष्टेत्यादि, सङ्क्लिष्टः-सातत्येन धार्मिकजनोपतापकर्त्ता रौद्राध्यवसायवान्, द्विष्टो-मत्सरी-गुणवद्गुणध्वंसनप्रगुणबुद्धिः, मूढो-हेयोपादेयविमर्शशून्यः, प्रखलः-प्रकर्षेण पिशुनः गुणवद्गुणासद्दूषणारोपणचतुरः, जडो-दुर्मेधा यो जन-स्तत्पामेव

चतुर्विधः स सङ्घस्तस्याम्नायः–शिष्यप्रशिष्यादिसन्तानः तत्र रक्ताः–प्रीतिमन्तः, यद्वा सङ्क्लिष्टादिविशेषणोपेतो जनो नाम सुविहितसङ्घस्तस्याम्नायो-गुरुपारम्पर्यागतश्रुतविरुद्धाचारणा, तत्र रक्ताः–पक्षपातिनस्तैः, ते हि स्वसदृशजनाचरितं प्रामाण्येन प्रतिपद्यन्ते, अत एव एवंविधा जिनोक्तप्रत्यर्थिनमेव मार्गं प्रथयन्ति। अथ दीप्यमाने सूर्ये इव पारमेश्वरे पथि कुत एवं प्रथनस्य तमस इवावकाशस्तत्राह–'जगति' लोके 'विरलतां' स्तोकतां–अल्पजनाभ्युपगमनीयतां 'याति' प्राप्नुवति सति। कस्मिन्? जैनेन्द्रमार्गे–भगवत्प्रणीते शुद्धे प्रतिश्रोतसि पथि। कस्मादेतत्? इत्यत आह–प्रोतसर्पदित्यादि, प्रोत्सर्पत्–श्रीवीरमुक्तिसमये तज्जन्मराशिसङ्क्रान्त्या तत्पक्षसङ्घस्य बाधाविधायित्वात् प्रोज्जृम्भमाणो भस्मराशिनामा–मङ्गलादिवत् क्रूरग्रहस्तस्य 'सखा' मित्रं, राजादित्वात्। ततश्च प्रोत्सर्पद्भस्मराशिग्रहसखं यद्दशमाश्चर्यम्–असंयतपूजालक्षणं। अत्र च सख्यं भस्मराशिदशमाश्चर्ययोर्लौकिकसखयोरिव द्वयोरपि साहचर्येण दुष्क[ऐकका]र्यकारित्वं यथाछन्दप्राबल्यकारित्वेन मिथ्यात्वपोषस्तस्य साम्राज्यमिव, साम्राज्यं यथा राज्ञः कस्यचित सकल–मण्डलाधिपत्यं[रिपुवि]जयपुरस्सरमाज्ञैश्वर्यं साम्राज्यमुच्यते, एवमिहापि सुविहित जन–तिरस्कारेण सकललोकस्यासंयतजनवशवर्त्तित्वं दशमाश्चर्यस्य साम्राज्यं, तेन 'पुष्यद्' एधमानं–वर्द्धमानं 'मिथ्यात्वं' अतत्त्वे तत्त्वप्रतिपत्तिरूपं, तदेव 'ध्वान्तं' अन्धकारं, सम्यग्ज्ञानावलोकन–निरासक्षमत्वात्, तेन 'रुद्धे' व्याप्ते जैनेन्द्रमार्गे। अथ क सति जैनेन्द्रमार्गे। मिथ्यात्व[ध्वान्त]रुद्धत्वाद्विरलतां प्राप्ते? इत्याह–इह किलेत्यादि, इह–जगति, किल–शब्दार्थस्त्वग्रे वक्ष्यते, प्राणिवर्गे–मानवसमुदाये सति। किंरूपे? लोकोक्त्या कलि कालो जिनोक्त्या दुःषमाकालस्तेन, कलिकाल एव–दुःषमाकाल एव निखिलानाचारगरलनिलयत्वाद् व्यालः–सर्पस्तस्य 'वक्त्रान्तरालं' वदनमध्यं, तत्र 'स्थितिं' अवस्थानं 'जुषते' सेवते यः तस्मिन्। अत एव तत्त्वेषु भगवत्प्रणीतेषु जीवाजीवादिषु 'प्रीतिः' एतान्येव वास्तवानि तत्त्वानि, न तु कुतीर्थिकप्रणीतानि, [इति] चेतसः प्रमोदः। तथा 'नीते' र्न्यायस्य–सदाचारस्य 'प्रचारः' प्रवृत्तिः। ततश्च गतौ–यथाक्रमं कुदर्शनाभ्यास–दुर्विदग्धत्वेन प्रमादाक्रान्तत्वेन च नष्टौ [तत्त्व]प्रीति–नीति–प्रचारौ यस्य स तथा, तस्मिन्। तथा, 'प्रसरत्' तथाविधगुरुसम्प्रदायाभावात्–प्रादुर्भवद् 'अनवबोधः' सम्यक्सिद्धान्तार्थापरिज्ञानं, तेन परिस्फुरन्तः कापथानां 'ओघाः' समूहास्तैः 'स्थगितः' तिरस्कृतः सुगतेरपवर्गलक्षणायाः 'सर्गो' निष्पत्तिर्यस्य स तथा, तस्मिन्। 'सम्प्रति' इदानी। किलेति सम्भावने, सम्भाव्यते एतत् यत्कलिकालानुभावात् सम्प्रत्येवंविधे प्राणिवर्ग इति वृत्तद्वयार्थः॥ ३–४॥

इदानीं योग्यश्रोतुरग्रे साधुवेषकल्पिते पथि दशभिर्द्वारैः तत्प्ररूपित धर्मं कथयन् तस्य च कर्मनिर्मूलनक्षमत्वमसम्भावयन् इदमाह—

यत्रौद्देशिकभोजनं जिनगृहे वासो वसत्यक्षमो ॥ ५ ॥

व्याख्या—अत्र पथि अय धर्मः-चेत्कर्महरो भवेत् तदा मेरुरब्धौ तरेदिति सम्बन्ध । 'अत्र' अस्मिन् प्रत्यक्षोपलभ्यमाने 'पथि' मार्ग-लिङ्गिकल्पिते मते धर्म औद्देशिकभोजनादिः, अय 'चेत्' यदि 'कर्महरो' ज्ञानावरणादिध्वंसदक्षो 'भवेत्' स्यात् तदानी मेरुर्लक्षयोजनमानः-पर्वतराजः 'अब्धौ' सागरे तरत् । अय च 'निदर्शना लङ्कारः-ततश्चायमर्थ -समुद्रे पाषाणखण्डस्य तरणमसम्भवि किं पुनर्मेरोः ?, ततो यथा मेरो' समुद्रतरणमघटमान एवमस्य धर्मस्य कर्महरत्वमिति । 'यत्र' यस्मिन्पथि, किं ? यतीनामौद्देशिकभोजनादिर्धर्म इष्यत इति सर्वत्र क्रियाऽध्याहार । तथा 'उद्देशेन' विकल्पेन-यतीन्मनसि कृत्वा निवृत्त-निष्पादित औद्देशिक । क्रीतादित्वाद्-इकण् । तच्च तद्भोजन चाशनादि । यद्यपि सिद्धान्ते औद्देशिकशब्द उद्गमदोषद्वितीयभेदार्थः श्रूयते, तथापीह वक्ष्यमाणवृत्तार्थपर्यालोचनेन आधाकर्मणि वर्तते, तस्यैवेह केवल यतिनिमित्त विधीयमानत्वेन महादोषतया विवक्षितत्वात्, उद्देशनिवृत्तस्य च सामान्य व्युत्पत्त्यर्थस्योभयत्रापि समानत्वात् । अत्र यतीनामौद्देशिकभोजनग्रहणे यथाछन्दा युक्तिं दर्शयन्ति-पूर्वं हि बहवोऽत्यन्त दानश्रद्धालवः श्राद्धा अभूवन्, तेन यतीनां प्रासुकैषणीयेनापि भैक्ष्येण निराबाध निर्वाहोऽभूत्, इदानीं दुष्षमाकालदोषात् दरिद्रता मल्पता च गच्छत्सु श्राद्धेषु ऐदंयुगीनमुनीना तथाविधशक्तिसहननविकलाना शुद्धेन भक्तादिना सयमनिर्वाहाभावे यदि कश्चिच्छ्रद्धालुस्तीर्थाविच्छेदमिच्छु श्राद्धः साधु सङ्घनिमित्तकृतभक्तादिनाऽपि धर्माधार शरीरमवष्टम्भयेत् तदा को दोषः ? आत्मा च यतिना यथा कथञ्चन रक्षणीयः, तस्माद्यतीनामाधाकर्मिकभोजनमदुष्ट, सयम-शरीरोपष्टम्भकत्वात्,कल्पग्रहणवच्छुद्धभोजनवद्वा । तथा यतिभिराधाकर्मिकभोजन विधेय, श्राद्धश्रद्धावृद्धिहेतुत्वात्, धर्मदेशनवदिति प्रयोगावप्युपपद्यते १ । तथा 'जिनानां' अर्हतां गृह, तत्र 'वासः' सर्वदाऽवस्थान । इह कचित्सुखशीलतयोद्यतविहार कर्तुमशक्नुवन्तो यतीना चैत्य एव सदाऽवस्थान युक्तमिति प्रतिपेदिरे, ते चाहुः-तस्मात् इदानीं जिनगृहवास एव साधूना सङ्गतः प्रतिभाति, न च तत्राधाकर्मिकादयो दोषाः, तीर्थकरार्थं कृतत्वात् । चैत्यम्-इदानीन्तनमुनीनामुपभोगयोग्य, आधाकर्मिकदोषरहित त्वात्, शुद्धाहारवदित्यादि । तदत्र सूक्ष्मदृष्ट्या विमृशता विदुषा चित्ते चैत्यवास एवेदा-

नीन्तनमुनिनां सङ्गतिमङ्गति २। तथा वसत्यक्षमेति, वसतौ-परगृहे निवासं प्रति-अक्षमा-मात्सर्यं, आधाकर्म-स्त्रीसंसक्त्यादिदोषजालरहितजिनगृहवासलाभे आधाकर्मिक-वसतिवासस्य अत्यन्तमनुचितत्वात्। को ह्युन्मत्तः पथ्याशनप्राप्तावपथ्यमश्नीयात्, तस्मात्परगृहवसतिरसमीचिनाऽधुनातनयतीनां। यश्चागमे परगृहवासः श्रूयते स तात्कालिक-सात्विक यति अत्यपेक्षयेति ३। तथा 'स्वीकारः' स्वायत्तापादनं, केषु? इत्याह-'अर्थो' द्रविणं 'गृहस्थः' श्राद्धः 'चैत्यसदनं' जिनगृहं ततोऽर्थश्चेत्यादि द्वन्द्वः, तेषु। तत्र द्रव्य-स्वीकारस्यागमे निषिद्धत्वेऽपि साम्प्रतयतीनां तत्स्वीकारो युक्तः, तं विना ग्लान-परचक्र-दुर्भिक्षाद्यवस्थायां भैषजपथ्याद्यनुपपत्तेः। प्रायेण गृहमेधिनां कालदोषान्निर्द्धनत्वेन निर्द्ध-र्मत्वेन च यतिचिन्ताद्यविधानात्, तेनार्थस्वीकारः साम्प्रतिकमुनीनां सङ्गत इवाभातीति ४। तथा श्रावकस्वीकारोऽपि अद्यतनमुनीनामुत्सर्गापवादपदविदुराणां न निर्युक्तिकः। पूर्वं हि कालस्य सौस्थ्यादतिशयवत्पुरुषबाहुल्याज्जैनमतबाह्या अपि जनाः श्वेताम्बरभिक्षुभ्यः सबहुमानं भिक्षादिकं वितेरुः, साम्प्रतं तु जैनमार्गवैमुख्येन तेषां तथाविध श्वेताम्बर-दित्साया अभावात्, अतः श्राद्धस्वीकारं विना भिक्षाऽवाप्तेरप्यनुपपत्तेर्युक्तः सम्प्रति श्राद्धस्वीकारः ५॥ तथा चैत्यस्वीकारोऽपि मुनीनां समीचीनः, सम्प्रति गृहस्थानां चैत्यचिन्तां प्रति निरवधानतया यतिस्वीकारमन्तरेण कालेन तद्भ्रंश सम्भवात् मार्गलोपप्रसङ्गेन चागमे त्वर्थापत्त्या तत्स्वीकारस्याभिधानात् ६। तथा न विद्यते 'प्रेक्षितं' चक्षुषानिरीक्षणं, आदिशब्दात्प्रमार्जनं रजोहरणादिना यत्र तदासनं विष्टरं स्यूतगब्दिकादौ शुषिरगम्भीरसिंहासनादौ च प्रत्युपेक्षणादि यतीनां न शुद्ध्यति, तेन च तत्र न कल्पते उपवेष्टुं। चैत्यावासिनश्चैवं प्रतिपद्यन्ते-प्रवचनप्रभावनाहेतोस्तादृशासनो-पवेशनस्यापि साधियस्त्वात्, प्रवचनप्रभावनायाः प्रधानदर्शनाङ्गत्वेन यथाकथञ्चन विधेयत्वात्। ततः सिद्धमिदं-आचार्याणां गब्दिकाद्यासनमुपादेयं, प्रवचनप्रभावनाङ्ग-त्वात, सम्मत्यादिप्रमाणशास्त्राध्ययनवत् ७। तथा 'सावद्यं' सपापं 'आचरितं' आच-रणा, तत्र 'आदरः' अग्रहः। आचरणा हि निरवद्यैव प्रमाणं, एषा तु सावद्या, गृ[हि]-ह(?) दिग्बन्धाद्याचरणाद्यभ्युपगमे यतेस्तद्विधीयमाननिखिलपापारम्भानुमत्याद्यापत्तेः, तथा ह्येषा चैत्यवासिभिरादृता, यतस्तेषामयमाशयः-प्रायेण सम्प्रतितन-यतीनां गृहस्था-न्योऽन्याकृष्या कलहेनाव्यवस्थया सर्वमसमञ्जसमापद्यते, तस्मादेषाऽप्याचरणाऽद्यतन-कालापेक्षया युक्तिमतीति ८। तथा 'श्रुतस्य' सिद्धान्तस्य 'पन्था' मार्गस्तत्रावज्ञा-अनादरः। ते ह्येवमाहुः-भगवत्सिद्धान्तो हि नैकान्तनिष्ठो, विहितानामपि केषञ्चिदनु-ष्ठानानां क्वचिन्निषेधात् निषिद्धानामपि क्वचिद्विधानात्, अतो न आस्थां कृत्वा केवलया सिद्धान्तव्यवस्थया किमपि कर्तुं परिहर्तुं वा पार्यते, तेनागमबहिष्टाऽपि काचित्सुकुमार

क्रिया अद्यतनसाधुप्रवर्त्तिता विवेकिना निःश्रेयसाय भविष्यति, किं श्रुतेनेति ९। तथा 'गुणिषु' ज्ञानादिवत्सु यतिषु 'द्वेषधी' मात्सर्यबुद्धिः, स्वय निर्गुणाना तद्गुणानसहिष्णूनां तदुपजिघांसया दुष्टा मतिरिति एते च परगृहवासिनो धार्मिक मन्या आत्मानमेवैक गुणैरुत्कर्षयन्तो निखिलानप्यपरान् दूषयन्त ऐदयुगीन सद्यमप्यवमन्यमा नास्त्वत्प्रवृत्तिं दूरेण परिहरन्तो लोकव्यवहारमप्यजानानाः सद्वनाह्या एव, अतस्सर्वथैनैते उच्छेत्तव्याः, द्वेष एवैषु श्रेयान् १०।

"गौतमादिषु वर्त्तित्वा-साहशेषु यतिष्वनि । कथमेतेषु वर्त्तेत ?, निर्गुणेष्वज्ञसेति चेत् ? ॥१॥"

"कल्पक्षोणिरुहा यद्वद्, गुणायोगेऽपि वत्तते । निम्बादिषु तदध्वानो,विना विप्रतिपत्तित ॥२॥"

"यथा च जात्यरत्नाना, गुणाभावेऽपि तादृशाम्। काचे सान्द्राशु चारचिक्ये, मणिशब्द प्रयुज्यते"

"गौतमादिगुणायोगे-ऽपीदानीन्तनसाधुषु । यथाच्छन्दस्तु स्वशक्त्यैव, प्रवर्त्यते यतिष्वनि ॥४॥"

इति नास्तत्र क्षान्त्यादिदशविधयतिधर्मस्पर्द्धयैव यथाछन्दैः प्रदर्शितो धर्मोऽप चेतकर्मदरो भवेदित्यादि पूर्वव्याख्यातमिति वृत्तार्थः ॥ ५ ॥

इदानीमेतानि दशद्वाराणि यथाक्रम कथयन् प्रथम तावज्जीवोपमर्दाद्यनेकदोष प्रकटनपूर्वमौद्देशिकभोजनद्वार प्रत्याख्यातुमाह—

षट्कायानुपमृद्य निर्दयमृषीनाधाय यत्साधित ॥ ६ ॥

व्याख्या—क 'सघृणो' दयालुर्विदन्-सद्यादिनिमित्तमेतन्निष्पन्नमिति जानन् इहेति प्रवचने 'जिघत्सति' अत्तुमिच्छति ?। "अत्रे गमन्तस्य धमादेशो रूप"। किं तत् ? 'भक्त' साधुसाध्वीरूप श्रमणगण आदिशब्दात्कृद्दिशादिश्रमणपरिग्रहः, तस्य भक्त-तरहते निष्पन्नमशनादि, नामेति कुत्सायां, अतीव कुत्सितमेतद्भक्त यतीना, जानतो मुनेः कपालोरेव विष भक्त भोक्तु न कल्पत इत्यर्थ । कथ तत्कुत्सित ? अत आह-यत्साधित, तच्छब्दस्य यच्छब्देन नित्याभिसम्बन्धात्, ततश्च यद्भक्त 'साधित' निष्पादित, गृहस्थेनेति शेष । किं कृत्वा ? 'आधाय' उद्दिश्य, कान् ? 'ऋषीन्' यतीन्, यतिभ्यो मयैतद्देयमिति चित्ते कृत्वेत्यर्थः। अथ निरवद्यवृत्त्या यतिनिमित्त कृतेऽप्यस्मिन् को दोष ? इत्याह-'उपमृद्य' विध्वस्य 'षट्कायान्' पृथिव्यप्तेजो वायु-वनस्पति-त्रसाख्यान् षड्विधजीवनिकायान्। कथमुपमृद्य ? इत्याह-निर्दयमिति क्रियाविशेषण । ननु भवत्वेतत्प्रत्ययं साधित कुत्सित, तथापि सिद्धान्तनिषेधात्

दूष्यतीत्याह–' शास्त्रेषु ' ग्रन्थेषु निशीथादिषु ' प्रतिषिध्यते ' यतिभोज्यतया निवार्यते यद्भक्तं, कथं ? असकृत्–अत्यन्तदुष्टताख्यापनाय मुहुर्मुहुः, तथा च आहारोपधि–वसत्या-धाकर्मविचारावसरे निशीथेऽभिहितं—

" एए सामन्नयरं, आहाकम्मं तु गिण्हए [भुंजइ] जोउ ।

सो आणा अणवत्थं, मिच्छत्तविराहणं पावे ॥१॥ " तथा पिण्डनिर्युक्तावपि—

"आकम्मं भुंजइ न पडिक्कमए य तस्स ठाणस्स । एमेव अडइ बोडो, लुत्तविलुत्तो जह कवोडो ॥ २ "

दशवैकालिकनिर्युक्तावपि—

" उद्दिट्ठकडं भुंजइ छक्कायपमद्दणे घरं कुणइ । पच्चक्खं च जलगए, जो पीअइ कहन्नु सो साहू ?॥३॥"

नन्वस्तु एवमागमनिषेधः तथापि तस्य मुनिना स्वयमकृताकारितानुमतत्वात्त-दा ददानस्य तस्य मुनेः को दोषः ? इत्याह–'निस्त्रिंशतां' निश्शूकतां–निर्दयत्वं 'आधत्ते' करोति यत्तत्तदाधायि–निश्शूकताकारकं यद्भक्तं । अयं भावः–स्वयमकृताद्यप्याधाकर्म-जानन् गृह्णानो मुनिर्भक्तिमद् गृहिणः प्रसङ्गासञ्जनात् अत्यन्तगृध्नुर्निश्शूकत्वेन सचित्तमपि न जह्यात्, अतः कथं न दोषः ?, तदुक्तं—

"सव्वं तहवि मुणंतो, गिण्हंतो वड्ढए पसंगं से । निद्धंधसो य गिद्धो, न मुअइ सजियं पि सो पच्छा ॥१

अत एव अत्यन्तम् एतत् जिहापयिषया गणधरा आनुरूप्येण–उपमानानि दर्शयामासुः । तथा चाह–गोमांसादीति, गोः–सुरभेर्मांसं, आदिशब्दात् वान्तोच्चारसुरा-ग्रहः तैरुपमा सादृश्यं यस्य तत्तथा । यद्भक्तमाहु–ब्रुवते गणधराः, यथाहि गोमांसभक्षणं लोकधर्मविरुद्धत्वेन महापापहेतुत्वादत्यन्तनिन्दितत्वाच्च विवेकिनां सर्वथा हेयं, तथाऽऽधा-कर्मभक्तमपि, एवं वान्तादिष्वपि यथासम्भवं योज्यं । अथेति प्रकारान्तरे, यद्भक्तं भुक्त्वा मुनिर्याति–गच्छति 'अधो'ऽधस्तात्, संयमादिति ज्ञेयं, अथवा अधोगति–नरकं । अत्र च वृत्ते एक वाक्यस्थेनैव यच्छब्देन सकलवाक्यार्थे दीपिते यत्प्रतिपदं यच्छब्दो-पादानं तत्सङ्घादिभक्तस्यात्यन्तपरिहरणीयता ख्यापनार्थं । यत्साध्वाभासैः–इदानीन्तन-कालापेक्षया यतीनामाधाकर्मभोजनमपीष्यते तदनुमानाभ्यां निषिध्यते, तथाहि–यतीना-माधाकर्मभोजनमनुपादेयं, षड्जीवनिकायोपमर्द निष्पन्नत्वात्, तथाविध वसत्यादिवत् । तथा यतीनामाधाकर्मभोजनमभोज्यं, धर्मलोकविरुद्धत्वाद्, गोमांसादिवदिति । एवं चोपपन्नमेतत्–सङ्घादिभक्तं यतीना न भोक्तव्यमिति वृत्तार्थः ॥ ६ ॥

इदानीं देवद्रव्योपभोगदूषणप्रदर्शनद्वारेण जिनगृहवासनिराकरणायाह—

गायद्गन्धर्वनृत्यत्पणरमणिरणद्वेणुगुञ्जन्मृदङ्ग ।

व्याख्या—खलुर्निश्चये, जिनगृहे 'अर्हन्मतज्ञा' भगवदागमनिपुणा यतयो नैव वसन्ति, तदागमे तद् निवासस्यात्यन्त निवारणात्, सन्तो-विवेकिनः । कुतः ? इत्यत आह-'सती' शोभनाऽकृत्रिमा भक्तिः तस्या 'योग्य' उचित, तस्मिन्, भक्तिरेव यतस्तत्र कर्तुं युज्यते । भक्तियोग्यतामेव विशेषतो विशेषणद्वारेण दर्शयति-गायदित्यादि, गायन्तो-भगवद् गुणानेवोत्कीर्त्तयन्तो 'गन्धर्वाः' प्रधानगायना यत्र तत्तथा, नृत्यन्ती-नाट्यशास्त्रोक्तक्रमेण करचरणादि-अङ्गविक्षेप कुर्वती 'पणरमणी' वारस्त्री नृत्यकी यत्र तत्तथा, रणन्तो-मुखमरुताभिघातान्मधुर ध्वनन्तो 'वेणवो' वंशा यत्र तत्तथा, गुञ्जन्तो-मार्दङ्गिकैः पाणिभ्या ताडनाद् गम्भीर स्वनन्तो 'मृदङ्गा' मरु[ मुर ]जा यत्र तत्तथा, प्रेङ्खन्त्यो-लम्बमानत्वात् मन्दपवनेन कम्पमाना देवसेवार्थं विरचिताः 'पुष्प स्रजः' पुष्पमाला यत्र तत्तथा, उद्यत्-भगवत्प्रतिमा विलेपनार्थं विमर्दनसमुच्छलद्गन्ध द्वारेण प्रसरन्मृगमदः-कस्तूरिका यत्र तत्तथा, लसन्तः-पट्टांशुकमयत्वान्मुक्ताफलादि विच्छित्ति युक्तत्वाच्च दीप्यमाना उल्लोचा-श्चन्द्रोदया यत्र तत्तथा, चञ्चन्तो-महाघन-वस्त्रालङ्कारालङ्कृतशरीरत्वात् भ्राजिष्णवो 'जनौघाः' श्रावकसङ्घा यत्र तत्तथा, ततश्च गायद्गन्धर्वं च तन्नृत्यत्पणरमणि चेत्यादि कर्मधारयस्तस्मिन् । एतानि हि भगवद्गुण गानादीनि प्रवराणि जिनगृहे भक्तिहेतुकानि, भव्यानां शुभभावोल्लासहेतुत्वात् श्रद्धालुभिः क्रियन्ते, अथैवंविधे भक्तियोग्यजिनगृहे किमिति साधवो न निवसन्ति ? अत आह-'त्रसन्तो' बिभ्यन्त, कुतो ? देवद्रव्यस्य 'उपभोगः' सतत तत्र शयनासनभोजनादि करणेन उपयोग तथा 'ध्रुवा' शाश्वती-यावज्जीव अथवा 'ध्रुव' निश्चित 'मठो' जिनगृहजगतीसम्बद्धो यतिनिमित्तनिष्पन्न उपाश्रयस्तस्य 'पतिता' आधिपत्य-जिन गृहलेख्यकोद्ग्राहिणिका कर्मान्तरादि सकलचिन्ताकारित्वेनाधिकारित्वमिति यावत् । तथा भगवत्प्रतिमा-प्रत्यासत्तौ भोजन-शयनासन-निष्ठीवनाद्यविधिकरणेन भगवदाशातना अवज्ञा, ततश्च देवद्रव्योपभोगश्चेत्यादि द्वन्द्वः । ताभ्यः । अथ गृहिणा भगवन्निमित्त स्व द्रविणेन निर्मापिते देवगृहे वसतो देवद्रव्य कनकादिकमनुपभुञ्जमानस्य यतेः कथ देव-द्रव्योपभोगः ?, जिनद्रव्यनिष्पन्ने हि तत्र निवसतस्तद्रव्य साक्षाद्भुञ्जानस्य गृह्णतो वा स्यादिति चेन्न, गृहिणा स्वद्रव्यनिर्मापितत्वेऽपि तस्मिन् देवार्थं कृतत्वेन देवद्रव्यत्वात्, तथा च तत्र वसतः साक्षात्तद्द्रव्यमनुपभुञ्जानस्यापि मुनेर्देवद्रव्योपभोगोपपत्तेः, साक्षाद्देव द्रव्यनिष्पन्ने तु का वार्त्ता ? इति यतिभिर्जिनगृहे न वासः कार्य इति वृत्तार्थः ॥ ७ ॥

इदानीं जिनाद्यासेवितत्वेन सिद्धान्तोक्तत्वेन च यतीनां परगृहवसतिं व्यवस्थापयन् वसत्यक्षमा द्वारं काव्यद्वयेन निरसिसिषुराह—

साक्षाज्जिनैर्गणधरैश्च निसेवितोक्तां ॥ ८ ॥

चित्रोत्सर्गापवादे यदिह शिवपुरीदूतभूते निशीथे ॥ ९ ॥

व्याख्या—कः सकर्णः पुमान् 'परगृहे' गृहस्थगृहे 'वसतिं' निवासं 'विद्वेष्टि' मात्सर्यात् न क्षमते-निषेधयति ? मुनिपुङ्गवानां-सुविहितयतीनां, न कश्चिदित्यर्थः । अयमर्थः-अकर्णो हि कर्णौ विना सिद्धान्तोक्तामपि परगृहवसतिमनाकर्णयन् द्विष्यादपि, यः पुनः 'सकर्णः' सश्रवणः अथ च सहृदयः—परगृहवासचैत्यान्तर्वासगुणदोषविचारचतुर इति, स परगृहवसतिं यतीनामनुमोदयत्येव, न तु द्वेष्टि । किंरूपां वसतिं ? 'निषेविता' च सोक्ता चेति कर्मधारयः । कथं ? 'साक्षात्' प्रत्यक्षं—स्वयमित्यर्थः । कैः ? जिनैः—स्तीर्थकृद्भिर्गणधरैः—गौतमस्वामिप्रभृतिभिः । चः समुच्चये । जिनादिभिरुक्ता, तां । तथा सज्यते सक्यते जनोऽस्मिन्निति सङ्गः—गृह-धन-कनक तनय-वनिता स्वजन-परिजनादिपरिग्रहः, निर्गताः सङ्गात् निःसङ्गास्तेषां भावस्तत्ता, तस्या 'अग्रिमं' मुख्यं 'पदं' स्थानं मुनीनां परगृहवसतिः, अथवा निस्सङ्गताया 'अग्रिमं' मौलं 'पदं' लक्ष्म—लिङ्गमित्यर्थः "पदं व्यवसितत्राण—स्थानलक्ष्मांघ्रि वस्तुषु" इत्यनेकार्थवचनात् । निस्सङ्गता हि मुनित्वलक्षणं, वह्निरिव दाहपाकादिसामर्थ्यस्य, तस्याश्च लिङ्गं परगृहवसतिः, नहि स्वाधीने विभवे विद्वान् कश्चित्परमुपजीवेदिति । अत्र च पदशब्दस्यावि[ शि ]ष्टलिङ्गत्वान्न विशेष्यलिङ्गता किं कुर्वन् विद्वेष्टि ? इत्यत आह—'जानन्' आगमश्रवणेनाववुध्यमानः । कां ? शय्यातर इत्युक्ति-भाषा, ताम् । सिद्धान्ते हि शय्यातर इति भाषा श्रूयते, न चासौ साधूनां परगृहवासं विनोपपद्यते, तथाहि—'शय्याया' वसत्या यतिभ्यो दानं, तया तरति संसारसमुद्रमिति शय्यातरशब्दार्थः, परगृहवसतिं विना यतीनां न कश्चित्साधुशय्यादाने यतेत, न च तरणमस्तीति शय्यातरशब्दस्य स्वार्थालाभे निर्विषयत्वापत्त्या सिद्धान्ते प्रतिस्थानमुच्चारणं कथमिव शोभां बिभृणात् ?, तस्मादागमे शय्यातरशब्दश्रुतेरपि परगृहवसतिर्मुनीनां ज्ञायते । तथा अनगारपदं च, जानन्निति सम्बध्यते । चः समुच्चये । न विद्यते 'अगारं' गृहं यस्यासौ अनगारः, ततश्च अनगार इति पदव्यपदेशः, श्रुते ह्यनगारपदं यतिवाचकं प्रतिपदं श्रूयते, तच्च तेषां स्वागराभावेन परागारवासेन च सङ्गच्छते । अन्यथा स्वागारसद्भावे चैत्यवासे वा यथाक्रमं यतेर्गृहपति-मठपति-व्यपदेशप्रसङ्गेना—नगारपदवैयर्थ्यमापद्येतेति । ननु यदि हि सर्वागमे चैत्य-

" अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असईए ।
गीयत्था जयणाए, वसंति नो भावपडिबद्धे ॥ ३ ॥ "

" जह कारणे पुरिसेसु, तह कारणे इत्थियासु विवसंति ।
अद्धाणवाससावय–तेणेसु य कारणे वसइ ॥ ४ ॥

तत अपोद्य किं कृतमित्यत आह–न्ययमि, संयतानां निवास इति सम्बन्धः । 'संयतानां' सुविहितानां निवासो–ऽवस्थानं न्ययमि क ? ' अगारिधाम्नि ' गृहस्थगृहे । कीदृशे ? स्त्रीणां ' संसक्तिः ' संसर्गो–रूपाद्यापातसत्यासक्तिः । आदिग्रहणात्पशुपण्डकादिग्रहः । ' तद् युक्तेऽपि ' तत्सहितेऽपि, आस्तां तद्रहित इत्यपि शब्दार्थः । ननु " बंभवयस्स अगुत्ती " इत्यादि वचनात्स्त्रीसंसक्तिमति—

" पसुपंडगेसु वि इहं, मोहानलदीवियाण जं होइ ।
पायमसुहा पवित्ती, पुव्वभवब्भासओ तह य ॥ १ ॥ "

इत्यादि वचनात्पशुपण्डकसंसक्तिमति च परसदने वसतां संयतानां मन्मथोत्कलिकाद्यनेकदोष सम्भवात् कथं तत्र वासो नियमितः ? तत्राह–अभिहिता निशीथे प्रतिपादिता यतना स्त्रीसंसक्त्यादि सम्भवत्कन्दर्पविकारा असत् प्रवृत्तिनिवृत्तिपटीयसी तिरस्करणी कटाद्यन्तर्द्धानरूपा चेष्टा, यदाह—

" जीइ पभूयतरा, सप्पवित्ति विणिवित्तिलक्खणं वत्थुं ।
सिज्झइ विगइ जओ, सा जयणाणाए विइयम्मि ॥ १ ॥ "

' आणाए विइयंमि ' त्ति आज्ञया–आप्तोपदेशनीत्या 'विपदि' द्रव्य-क्षेत्र-काल-भावादीत्यर्थः । ' तत्कारिणां ' तदुद्यतानां, यथाह—

" भावम्मि ठायमाणा, पढमं ठायंति रूवपडिबद्धे ।
तहियं कडगचिलिमिली, तस्सा सइठंति पासवणे ॥ १ ॥ "

" पासवणे मत्तएसुं, गणे अन्नत्थ चिलिमिलीरूवे ।
सज्झाए झाणे वा, आवरणे सद्दकरणे य ॥ २ ॥ "

" जहि अप्पयरा दोसा, आभरणाईण दूर उमिया ।
चिलिमिलीनिसि जागरणं, गीए सज्झाय झाणाई ॥ ३ ॥ "

" अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असईए ।
गीयत्था जयणाए, वसंति तो दव्व सागरिए ॥ ८ ॥ "

" अद्धाणनिग्गयाई, वासे सावयभए व तेणभए ।
आवलिया तिविहे वी, वसंति जयणाइ गीयत्था ॥ ९ ॥ "

इय यतना स्त्रीसमक्तिरमतिमधिकृत्योक्ता । पशुपण्डकसमक्तायामपि वसतौ वसताम् एतदनुसारेण सम्मतिनी यतना द्रष्टव्या, तदयमर्थः–स्त्रीसमक्त्यादि मम्भवेऽप्येव विध यतना सावधानानां मुनीनां तदन्यथा दोषाः प्रादुष्यन्ति सर्वत्रेति, सर्वस्मिन् अपि वसत्यधिकारप्रवृत्तोद्देशकादौ । नन्वेव यतनावतां चैत्यवासेऽपि को दोष ? इत्यत आह न तु, 'तु' पुनरर्थेऽवधारणे वा, तेन न पुनर्नैव वा 'मत' इष्टः क्वापि उद्देशकादौ चैत्यजिन गृहे निवासो निवास इत्युभयत्र योज्यते, एतदुक्तं भवति–यदि हि चैत्यवासो यतीनां कश्चिन्मतः स्यात् तदा स्त्रीसमक्त्यादि युक्त इव गृहे वसता, तत्रापि काश्चित् यतनां ब्रूयात् न चैव, ततोऽवसीयते–अगारिधाम्न्येव सयतां–यतीनां वासो, न चैत्य इति । तस्मात् न सक्तोंन तत् द्वेषो विषेप इति काव्यद्वयार्थः ॥ ९ ॥

साम्प्रतमर्थादित्रय–गोचरस्वीकार–द्वारत्रयमेकवृत्तेनाह—
प्रव्रज्याप्रतिपन्थिन न तु धनस्वीकारमाहुर्जिना , ॥ १० ॥

व्याख्या—नतिरत्यक्षमायां, न क्षम्यत एतत्, यदुत–साधूनां धनस्वीकार इति, यतो 'धनस्वीकार' द्रव्यसङ्ग्रह 'आहुः' ब्रुवन्ति जिना', अत्र जिनानाम् इदानी मतीतत्वेनोपदशासम्भवात् 'आहु.' इत्यप्रातीतविभक्तिप्रातावपि यद्वर्त्तमानकथन तत्तेषां स्वागमे. ग्रन्थसग्रहविपाकप्रतिपादकैः स्फुरद्रूपतयाऽद्य यावदनुवृत्तिभिरभेदाध्यवसायेन वर्त्तमानतयाऽऽभासात् तदुपदशदानप्रदर्शनेन शिष्याणा धनस्वीकार प्रत्यतिजिहीर्षा यथा स्यादिति ज्ञापनार्थं, एव उत्तरपदेऽपि योज्यम् । कीदृश ? 'प्रव्रज्यायाः' सर्वसङ्ग त्यागरूपाया दीक्षाया' 'प्रतिपन्थिन' विरोधिन, विरोधश्चात्र वध्यघातकलक्षण तथाहि– द्रव्यसग्रहो मूर्च्छापरिणाम' प्रव्रज्या च तद्विरतिपरिणामः तयो चात्र बलवता मूर्च्छापरि णामेन तद्विरतिपरिणामो बाध्यत इति तथा 'सर्वारम्भिणां' सकलसावद्यारम्भप्रवृत्तानां गृहिणां परिग्रहो मूर्च्छाहेतु' मामकत्वबुद्धिः स तथा, त । तुशब्दोऽर्थस्वीकारात् अस्य भेदप्रदर्शनार्थः । अतिशयेन ' महासावद्य ' महासपाप ' आचक्षते ' वदन्ति, जिना इति पूर्वस्मात् अनुकृष्यते । अत्र चाहुरिति क्रियाऽनुवृत्तावपि सावद्यसिद्धा वाचक्षत इति पुनरभिधान

द्वारान्तर-निराकरणमेतदिति ज्ञापनार्थम् । अयमर्थः—गृहिपरिग्रहे हि तत्कृतकारितादि-सकलमहारम्भ-महापरिग्रह-जनितपापानुमत्यादिना यतीनामपि तत्कृतादिनिखिलपाप-प्रसङ्गोऽतः कथं तस्य नातिमहासावद्यता ?, परकृतमहापापस्यात्मन्यध्यारोपणमेव चातिशब्दार्थः । तदुक्तं—"आरम्भनिर्भर गृहस्थपरिग्रहेण, तत्पातकं सकलमात्मनि सन्दधानाः । सत्यात् पतन्त्य-ह ह !! तस्करमोपदोपं, माढ्यनिग्रहभयं सितभिक्षुपाशाः ॥ १ ॥" इति । अतएव गृहिपरिग्रहो यतीनां प्राश्चित्तापत्त्या श्रुते निवारितः, यदुक्तं "ओसन्न-गिहिसु लहुगे" त्यादि । एतेन गृहिस्वीकारं प्रति यत्परस्य पूर्वं हि कालस्य सौस्थ्यादिना युक्त्यभिधानं तदपि निरस्तम् । कालदोपात् कुतीर्थिकादि-भूयस्त्वेऽपि गृहिस्वीकारमन्तरेणापि भद्रकादि श्राद्धेभ्यो यतीनामधुनाऽपि भिक्षादिप्राप्तेरुपपत्तेः, अतः केवल औदरिकत्वापत्त्याऽतीवोपहासपदं विदुषां तदर्थस्तत्स्वीकार इति । योऽपि "जा जस्स ठिई जा जस्स संतिइ पुव्वपुरिस कय मेरो सो तं अइ कमंतो अनंत संसारी उ होइ । इत्यागमोपन्यासः सोऽपि न भवदभिमतप्रसाधकः, अन्यार्थत्वात्, न हि गृहि-परिग्रहसाधकोऽयं प्रकृतागमः, किन्तु गणधरादीनां शिष्य-प्रतिशिष्यपरिग्रहविषयः, तथाहि—या काचित् अस्य गणधरशिष्यप्रतिशिष्यादेः स्थितिः—प्रतिक्रमणवन्दनादौ न्यूना-धिक-क्षमाश्रमणदानादि-लक्षणा सामाचारी, या वा यस्य सन्ततिर्गुरुपारम्पर्येणालोच-नादि दानविषयः सम्प्रदायः, या च पूर्वपुरुषकृता गणधरादिप्रवर्त्तिता 'मेरा' मर्यादा-गच्छव्यवस्था, तामतिक्रामन् अनन्तसंसारिको भवतीति, अत्र हि गणधरशिष्यादीनां स्वस्वगुरुप्रदर्शित-स्थित्याद्यतिक्रमेऽनन्तसंसारितापत्त्या प्रतिनियतगणधरपरिग्रहविषयत्व-मवसीयते, श्रावकाणां तु सर्वधार्मिकगच्छेष्वविशेपेण भक्तपानादि भक्त्यभिधानात् । धर्मगुरुषु तद्गच्छे वा विशेपेण दानभक्तिप्रतिपादनं तत्तेषां दुष्प्रतीकारतया, न तु तत् स्वीकारविषयतयेति । एवं गृहिपरिग्रहः सर्वथा यतीणां नोचित इति ५ । तथा 'चैत्यस्य' जिनगृहस्य 'स्वीकरणं' स्वायत्ततापादनं, तत्र । तुरत्रापि प्रथमद्वारादस्य भेदमाह—'गर्हिततमं' प्रत्यहं सकलचैत्यकृत्यचिन्ता तद्द्रव्योपभोगादिना लोकेऽप्यति-निन्दितं 'माठपत्यं' मठनायकत्वं 'स्यात्' भवेत् 'यतेः' मुनेः । एतदुक्तं भवति—चैत्यस्वीकारे हि यतीनां तच्चिन्तनं सकलमनुष्ठेयं, तस्य चारम्भदोपवत्तया द्रव्यस्तवत्वेन यतीनां निवारणात्, एवं च त्वमेव परिभावय मार्गानुसारित् या बुद्ध्या यन्मुनेर्देवा-धिकारं चिन्तयतः कथं माठपत्यमतिकुत्सितं न प्रसज्यत ? इति । लौकिका अप्याहुः—तथा—" यदीच्छेन्नरकं गन्तुं, सपुत्रपशुबान्धवः । देवेष्वधिकृतिं कुर्यात्—गोषु च ब्राह्मणेषु च ॥ १ ॥ तथा " नरकाय मतिस्ते चेत्, पौरोहित्यं समाचर । वर्षं यावत्किमन्येन, माठपत्यं दिनत्रयम् ॥ १ ॥ २ ॥

इदानी निगमयति–यस्मात् अर्थे यस्मात् एव–मित्युक्तक्रमेण 'व्रतवैरिणी' चारित्र–प्रतिपन्थिनी, इति हेत्वर्थे भिन्नक्रमः स चाग्रे योक्ष्यते, ममता–अर्थादिषु स्वीकारबुद्धिः, इति यस्माद्धेतोर्न युक्ता–नोपपन्ना–' मुक्त्यर्थिनां ' निर्वाणाभिलाषिणा मुनिनामिति वृत्तार्थः ॥ १–१० ॥ ६ ॥

साम्प्रतम् असयमादि–दोषप्रदर्शनेनाप्रेक्षितायामन–द्वार निराकर्तुमाह—

भवति नियतमत्रासयमः स्याद्विभूषा ॥ ११ ॥

व्या०—' भवति ' जायते 'नियत' सर्वदा 'अत्र' गन्दिकाद्यासनेऽसयमो जीव रक्षाऽभावः, गन्दिकादेर्नित्यस्यूतत्वादिना प्रत्युपेक्षणादि अभावे विवरादिना तदन्तः प्रवि ष्टानां तदन्तरे चोत्पन्नानां वा भ्रमादीनां तत्रोपवेशनेन विनाशसम्भवात् । भिक्षोरिति वृत्तमध्यस्थ पद सर्वत्र सम्बध्यते । ' स्यात् ' भवेत् ' विभूषा ' शोभा, तत्रोपविष्टस्य जगतोऽप्युपरिवर्त्यहमिति विभूषा कार्यमिमानप्रवृत्तेः, विभूषा च यतीनामवश्य वर्जनीया, यदुक्त—"विभूसावत्तिय भिक्खू, कम्म बधइ चिक्कण । ससारसायरे घोरे, जेण पडइ दुरुत्तरे ॥ १ ॥" इति । 'नृपते.' राजः 'ककुद' चिह्न, राजादीनामेव प्रायेण महर्द्धिकानां तत्रोपवेशन–दर्शनात् । 'लोकहासो' जनतोत्प्रासन, चशब्दो दोषसमुच्चये । 'भिक्षोः यतः' अहो ! ! भिक्षोपजीविनो मुण्डिता अपि एवविधासनेषूपविशन्तीत्यादि सेर्ष्यजनवचन श्रवणात् 'स्फुटतरो' लोकप्रकटः । इह गन्दिकादौ 'सङ्गः' परिग्रहो महाघनत्वेन मूर्च्छा हेतुत्वात् 'सातशीलत्व' सुखलालसत्व,' तदन्तरेण हसरूतदिपूर्णेषु सुस्पर्शेषु तथाविधा–सनेषु यति अनुचिततया सिद्धान्तनिषिद्धेषूपवेशोऽसम्भवी, उच्चै–रतिशयेन, इति हेतौ । – एभ्यो हेतुभ्यो 'न खलु' नैव, खलुरवधारणे मुमुक्षो–र्मोक्षार्थिनो यतेः 'सद्गत' युक्तियुक्त गन्दिकाद्यासन, उपभोगतयेति शेष । लोकप्रसिद्धो रूतादिभृत आसनविशेषो गन्दिका । आदिशब्दात्–मसूरसिंहासनादिपरिग्रह. । एतेन यदपि "नाणाहिओ वरतर" इत्याद्या गमबलेन प्रवचनप्रभावनाङ्गतया यतीनां गन्दिकासिंहासनादि–आसनोपवेशनमम र्न तदपि सुखशीलताविलसित । तदेव यतीनां गन्दिकाद्यासनमनुपादेय, असयमहेतुत्वात्, आधाकर्मिकभोजनवदिति वृत्तार्थः ॥ ११–७ ॥

साम्प्रत सनामोच्चार–गावद्याचरिताभिधान–पुरस्सर–तद्दोषप्रदर्शनेन गावद्य–चरितद्वार निरस्यन्नाह—

गृही नियतगच्छभाग् जिनगृहेऽधिकारो यते ॥ १२ ॥ ( पृथ्वी )

व्याख्या—'गतस्य' पूर्वं प्रस्थितस्य कस्यचित् 'अनु' पश्चाद् 'गतं' गमनमन्यस्य यत्तद् गतानुगतं, तदेषामस्तीति गतानुगतिकाः। अस्त्यर्थे इक प्रत्ययस्तद्धितः। अयमर्थः—यथा गड्डरिकाः काञ्चन दिशं प्रतीत्य काञ्चिदेकामविवेकां पुरो गच्छन्तीमवलोक्य तदनुमार्गेण पाश्चात्याः सर्वा अपि तामनुगच्छन्ति, न मार्गस्य सुगम-दुर्गमत्वादिकं मृगयन्ते, तथा जिनप्रवचने सुखलोलतया कञ्चिदेकं प्रवाहमार्गे गच्छन्तं वीक्ष्य तच्छीलतयाऽन्येऽपि तद् न्यायान्यायतामविचारयन्तो ये तमनुगच्छन्ति ते संसारपथाभिनन्दितत्वात् तथोच्यन्ते, तैर्गतानुगतिकै-र्लोकप्रवाहपतितै-र्यत्याभासैः 'अद' एतत्सकलजनप्रत्यक्षं गृहिनियतगच्छभजनादिकं सावद्याचारितम्, अस्य सावद्याचरितस्य अनेकविधस्यापि समुदायरूपतयैकत्व विवक्षणात्। कथमिति क्षेप "गर्भप्रकारवचनो निपातः" केन कुत्सितप्रकारेण 'असंस्तुतं' यतीनाम्-अकृत्यतया अपरिचितम् अपि अनुचितमिति यावत्। 'प्रस्तुतं' प्रारब्धमादृतमित्यर्थः। तदेव नाम ग्राहमाह-गृही श्रावको 'नियतं' गच्छान्तरपरिहारेण-एकतरं 'गच्छं' आचार्य प्रतिबद्ध यतिसमुदायं 'भजते' परिगृह्णाति स तथा, गृहिणां नियतगच्छभाक्त्वे हि यतीनामिदानीं सर्वं भक्तपानादि निराबाधं निर्वहतीति धिया तादृश गुरुपदेशेन गृही निश्चितनिजगच्छभाग् भवतीति क्रियापदं यथासम्भवमध्याहार्यं, गृहिनियतगच्छभाक्त्वञ्च यतीनां तद्गतसकलारम्भानुमत्यादिना पापसत्वप्रसङ्गेना-संस्तुतं। तथा 'जिनगृहे' देवसदने'ऽधिकारः' सकलतत्कृत्यचिन्तनं नियोगो 'यते'र्मुनेः, श्राद्धानामिदानीं तच्चिन्तानिरवधानता-व्याजेन अस्य चासंस्तुतत्वं चैत्यस्वीकारद्वार-निराकरणे प्रागेव दर्शितं। तथा 'प्रदेयं' वितरणीयं अशनादि, अशनं-भोजनमोदनादि, आदिशब्दात् पानकादिग्रहः 'साधुषु' यतिषु। अत्र च सम्प्रदानेऽपि विषयविवक्षया सप्तमी। 'यथा-तथा' येन तेन प्रकारेण-अशुद्धमपीत्यर्थः। 'आरम्भिभि'र्गृहस्थैरधुना केवलेन शुद्धेनाशनादिना निर्वाहाभावादिति, छद्मना अशुद्धाशनादि दानप्रवर्त्तनस्य चासंस्तुतत्वम् औद्देशिकभोजननिरसनावसरे प्रतिपादितं। तथा 'व्रतं' सर्वविरतिः, आदिशब्दाद्देशविरतिसम्यक्त्वारोपण तदन्तिकगमनादिग्रहः, ततश्च 'व्रतादिविधेः' सर्वविरत्यादि-अभ्युपगमस्य 'वारणं' निषेधः 'सुविहितान्तिके' सन्मुनिसमीपे अगारिणां-श्राद्धानां, एतत् देशनापरिणतान्तःकरणा न अस्मत्पार्श्वे दीक्षादिकममी गृहीष्यन्ति इति बुद्ध्या, एतस्य चासंस्तुतत्वं तेषां सुविहिताभ्यासे देशनाकर्णन-व्रतादिनिषेधेन यत्याभास उत्सूत्रदेशना असिलताऽलून-विवेकमस्तकतया, तद्धेतुकानिवारित-प्रसरदुर्गतिवज्रपाता-पातनात्, अन्यदुर्गतिपातनं च यतीनां पापादपि पापीयः। एवं च चिन्त्यमानमाधुनिकमुनीनां सावद्याचरितमागमविरुद्धतायाः कथं न जाघटीति? इति काव्यार्थः॥ १२॥ ८

इदानीं श्रुतपथा-वज्ञा-द्वार-निरासमुपक्रमते—

निर्वाहार्थिनमुज्झित गुणलवैरज्ञातशीलान्वय ॥ १२ ॥

व्याख्या—' निर्वाहार्थिन ' केवलोदरभरणप्रयोजन, न तु ससारनिस्तार कांक्षिण, उज्झित-हीन ' गुणलवैः ' क्षमादिलेशैरपि, प्रव्रज्यायोग्यो हि पुरुष क्षमादि गुणवान् भवति, तदुक्त—" पव्वजाए जोग्गा, आरियदमम्मि जे समुप्पन्ना । जाइ कुलेहि विसिट्ठा, तह खीणप्पायकम्ममला ॥ १ ॥ एव पवइए चिय, अवगय ससारनिग्गु णमहाचा । तत्तो य तव्विरत्ता, पयणु-कसायऽप्पहासा य ॥२॥" अय तु क्षमादि अशेनापि त्यक्तः । तथा 'शील' स्वभावः सद्वृत्त च ' अन्वयश्च ' कुल, शील चान्वयश्चेति द्वन्द्व', ततः अज्ञाता-अविदितौ शीलान्वयौ यस्य स तथा, त। परीक्षित-शीलकुलस्य हि प्रव्रज्या-दान शास्त्रेऽभिहित, अविदितस्वभावो हि कषायदुष्टादिना क्वचिदपराधे गुर्वादिना शिक्षित' तमपि जिघांसति, एवमज्ञातवृत्तोऽपि तस्करादि' प्रव्रजितः तच्छीलत्वात् स्तैन्या दिक कदाचिदाचरन् गच्छमपि तुलायामारोपयति, तथा अविदितकुलो दीक्षित, कथमपि कर्मोदयात् दीक्षा जिहासुर्निरङ्कुशतया जहात्येव, कुलीनस्तु कदाचिदकार्यं चिकीर्षुरपि कौलिन्य-सततगुरुशिक्षा-निबिडनिगडनियमितो न करोत्येव । तथा ' मुण्डीकृत ' दीक्षित ' गुरुणा ' आचार्येण । तादृशि-विनेयवशसमे वशे जातः स तथाऽकुलोद्भव इत्यर्थ' । तथा तेन तत् सजातीयुनि ेिप तुल्या गुणा नि'शीलतादयो धर्मा यस्य स तथा । तत कर्मधारयस्तेन कर्मधारयसमासकरणेन च गुरुशिष्ययो वशगुणात्यन्तसाजात्य व्यनक्ति, तादृशो हि तादृशमेव मुण्डयते "समानशीलव्यसनेषु सख्य"मिति वचनात् । 'स्वार्थं' स्वप्रयोजनाय-स्वशरीरशुश्रूषादिहेतवे, नतु ससारदुःखेभ्यो मोचयितु, तमेव निध 'यदर्चयन्ति' सलयन-घु-मण-घनसारादिना वस्त्रादिना च सतत पूजयन्ति । 'अधिक' मिति क्रियाविशेषण-अतिरिक्त ' देवेभ्यो ' जिनेभ्योऽपि ' जना ' श्रावकलोकाः । ननु ते त पूजयन्तः तादृग्गुणा एव भविष्यन्तीत्यत आह-'निरुपातगुणान्वया अपि' जगती प्रतीतगाम्भीर्यौदार्य-क्षमादिगुणमहाकुला अपि, आस्ता तदितर इत्यपि शब्दार्थः । कस्मादेवमित्यत आह-लग्नोमगन्छग्रहा इति हेतुगर्भं विशेषण । लग्नः-चेतसि निविष्ट ' उग्रो ' दृढो ' गच्छग्रहो ' गच्छप्रतिबन्धो येषां ते तथा । भवतु निर्गुणो वा गुणी वाऽय, किं नोऽनया चिन्तया ? गुरुभिरयमस्माक प्रदर्शित , तथा अस्मद्वशयैरपि अय गुरुत्वेनाभ्युपगतः, न च वय तेभ्योऽपि परीक्षा दक्षा, अत' तत्परिपाटीमनुरुध्यमाना नैन हास्याम इति विहितस्वगच्छगोचरमनोऽभिनिवेशा इत्यर्थः । अथ निपुणानामपि तेषां

तादृक्षे निर्बन्धे को हेतुरित्यत आह–'महतो' अतिप्रबलस्य 'मोहस्य' मिथ्याऽभिनिवेश-स्यापि तथाविधाभ्यर्चनादिकं 'जृम्भितं' लीलायितं, तथाहि–न गुरूपदर्शितत्वं निर्गुणेऽपि तच्छिष्ये अभ्यर्चनादि निबन्धनं, यदि हि गुरुः स्वाजन्यादिना निमित्तेन निर्गुणमपि स्वशिष्यं मोहाद् गुरुतया दर्शयति नैतावताऽसौ बहुमानमर्हति, विवेकिनां गुणानामेव बहुमान हेतुत्वात्, ते चेत् तत्र न सन्ति तदा किं निष्फलेन गुरूपदर्शितत्वेन ?, तथा स्ववंशजाभ्युपगमस्यापि निर्गुणगुरु बहुमानहेतुत्वे लक्ष्मीप्राप्तावपि नृणां स्वकुलक्रमा-गतदारिद्र्यादेरपरित्यागप्रसङ्गात् न चैवं लोक उपलभ्यते, यदुक्तं–"सुगुरुप्राप्तौ कुगुरुं, क्रमानुपक्तमपि जहति धीमन्तः । चिरपरिचितमपि नोज्झति, निधिलाभे को नु दौर्ग-त्यम् ॥ १ ॥" ततश्चैवं स्थिते यन्निर्गुणेऽपि गुरुत्वाभ्युपगमेनाभ्यर्चनाभि सन्धिः स महामोह महिमा एव इति वृत्तार्थः ॥ १३ ॥

एतर्हि गच्छमुद्रामुद्रिततया लोकानां सद्धर्माप्रतिपत्त्यादिना श्रुतावज्ञामीक्षमाणाः सविषादमाह—

दुष्प्रापा गुरुकर्मसञ्चयवतां सद्धर्मबुद्धिर्नृणां ॥ १४ ॥

व्याख्या–'दुष्प्रापा' दुर्लभा 'सद्धर्मबुद्धि' र्भगवत्प्रणीत–निरुप–चरित–धर्मजि-घृक्षा । पारमेश्वरस्य धर्मस्य सर्वस्यापि शोभनत्वाविशेषात् किं सदिति विशेषणेनेति चेत् ? न, तस्यापीदानीं कालदोषात् अनुश्रोतः–प्रतिश्रोतोरूपत्वेन द्वैविध्य दर्शनात्, तथाहि–सुख-शीलजनैः सिद्धान्तनिरपेक्ष–स्वच्छन्दमतिप्रवर्तितो बहुजनप्रवृत्तिगोचरः पन्था अनुश्रोतः, श्रुतोक्तसकलयुक्त्युपपन्नः स्वयं भगवत्–प्रज्ञापितः प्रेक्षावत् प्रवृत्तिविषयस्तु प्रतिश्रोतः, अतोऽनुश्रोतोऽव्यवच्छेदेन प्रतिश्रोतः सङ्ग्रहीतुं सदिति विशेषणं । केषां दुष्प्रापा ? 'नृणां' पुंसां 'गुरुकर्मसञ्चयवतां' महाज्ञानावरणादिसम्भारभाजां, सम्प्रति हि गुरुकर्मत्वाज्जीवानां न प्रायेण प्रतिश्रोतसि प्रवृत्तिरुपलभ्यते, यदुक्तं–"अयोग्यभावाद् गुरुकर्मयोगा–ल्लोक-प्रवाहस्पृहया दुरापा । प्रायो जनानामधुना प्रवृत्तिः, पथि प्रतिश्रोतसि जैनचन्द्रे ॥१॥" जातायामपि कथञ्चित् भव्यत्वपरिपाकात् प्रादुर्भूतायामपि सद्धर्मबुद्धौ 'दुर्लभो' दुरासदः 'शुभगुरु' यथार्थसिद्धान्तप्ररूपनिपुणो लोकप्रवाहबहिर्भूतचेतोवृत्तिः कालाद्यपेक्षानुष्ठान-पटिष्ठः सूरिः । अयमर्थः–सद्धर्ममनोरथभावेऽपि सदुपदेष्टृगुरुं विना नामावासाद्यते, यदुक्तं–"धम्मायरिएण विणा, अलहंता सिद्धिसाहणो । वायं । अरयव तुंबलग्गा, भमंति संसारचक्कम्मि ॥ १ ॥" स च प्रयेण साम्प्रतमुत्सूत्रभाषकाचार्यप्राचुर्येण तथाविधो नाल्पभाग्यलभ्यः, यदुक्तं–"यस्यानल्पविकल्पजल्पलहरीयुग्युक्तयः सूक्तयः, सज्जं जर्जर-

यन्ति सुसदि मद निस्फूर्जतां नादिनाम् । यद्योत्सूत्रपद न जातु दिशति व्याख्यासु स प्राप्यते, सच्चारित्रपवित्रित. शुभगुरु' पुण्यैरगण्यैर्यदि ॥ १ ॥ ” प्राप्तः–समासादितः ‘ स ’ उदितगुणगुरुर्गुरु ‘ पुण्येन ’ भवान्तरसम्भूतसुकृतेन ‘ चेत् ’ यदि, तथापि–शुभगुरुप्राप्तावपि ‘ कर्त्तुं ’ विधातु ‘ स्वहित ’ आत्मन आयतिसुखावह कर्म सद्धर्म-प्रतिपत्तिलक्षण ‘ नाल ’ न समर्था ‘ अमी ’ पुण्यप्राप्तशुभगुरवो मर्त्या. । अथा सादितसुगुरवोऽपि ते किमिति न स्वहिताय यतन्ते ? इत्यत आह–‘गच्छस्य’ स्वत्वशा भ्युपेत यतिवर्गस्य ‘ स्थितिः ’युष्मत्कुलादृतोऽय गच्छोऽस्त एन विहाय युष्माभिः नान्य देशना–श्रवण–सम्यक्त्व–प्रतिपत्त्यादिक विधेयमिति गृहिणः प्रतीत्य लिङ्गिकृता व्य वस्था, तया ‘ व्याहता ’ एवविधशुभगुरु प्राप्तावपि नि सत्त्वतया किमेनां गच्छस्थितिं मुञ्चामो न वेतीति कर्त्तव्यतोद्भ्रान्तान्त'करणा । एव गच्छस्थितिव्याहत तेषां स्वहित-करणासामर्थ्यमुपलभ्य तदुपचिकीर्षु' चेतः समुल्लसत्करुणापारावार. प्रकरणकारः प्राह–‘क ब्रूम ’ इत्यादि, अतः क पुरुषविशेष ‘ ब्रूमो ’ भणाम. ?, क ‘ इह ’ जगति ‘ आश्र येमहि’ सेवेमहि? क ‘ आराध्येम’ दानादिनोपचराम' ?, एतया भणनादीनां मध्यात्किं ‘ कुर्महे ’ विदध्महे ?, यदि कस्यचिन्महात्मनो भणनेन आराधनेन वा गच्छस्थितिं विमुच्य सद्धर्मप्रतिपत्त्या एते स्वहितमाचरन्ति तदेतदपि क्रियते, परोपकृति दी–क्षितत्वात्सु पुरुषाणामिति । अथवा यदाहि प्राप्तसुगुरवोऽपि तत्त्व जानाना अप्येव गच्छस्थित्या व्यामुह्यन्ति तदा क ब्रूम इत्यादि, अयमर्थ –अजानानो हि तत्त्व स्वय वा कस्यचिद्गुण नाराधनादिना वा तद्बोधयित्वा सद्धर्मे स्थाप्येतापि, एते च मूढा जानन्तोऽपि गच्छ स्थितिव्याहता, इति कथ तत्र स्थापयितु पार्यते ?, तत् सर्वथाऽस्मच्चेतस्यमीषां सन्मा र्गव्यवस्थापने न कश्चिदुपाय प्रतिस्फुरति, अत' ‘ किं कुर्महे ’ इति विषादवचन । इदमत्रैदम्पर्यं–महासत्त्वसत्त्वोपादेयो ह्यय सद्धर्म , एते चातिक्लीबा., अन्यथा किं विदुषां गच्छस्थितिभिया ?, यदि हि लिङ्गिन स्वलाभादिहेतुना गच्छस्थितिं दर्शयन्ति, तथापि गृहिणा परीक्षापूर्वं धर्म' प्रतिपत्तव्य इति वृत्तार्थ' ॥ १४ ॥

इदानीं कस्यचिद्योग्यस्या–धार्मिकपदप्राप्तस्या तदसमञ्जसचेष्टितप्रदर्शनेन श्रुतावज्ञामापयन्नाह–

क्षुत्क्षाम किल कोऽपि रङ्कशिशुक प्रव्रज्य चैत्ये क्वचित् ॥ १५ ॥

व्याख्या—‘क्षुत्क्षाम.’ बुभुक्षया क्षीणकुक्षि' गृहस्थावस्थायां, किलेति सम्भावने, कोऽपि–अज्ञातनामा‘रङ्को’ भिक्षाकोऽन्न एव दुर्गतोऽनुकम्पितो वा ‘शिशुको’ बाल , “कुत्सायामनुकम्पने वा क” । ततो रङ्कश्चासौ शिशुश्चेति कर्मधारय' । रङ्कस्य वा

कस्यचित् शिशुक इति, प्रव्रज्य-मुण्डीभूय 'चैत्ये' लिङ्गिसम्बन्धिजिनगृहे, कचिदनिर्दिष्टनाम्नि 'कृत्वा' विधाय लञ्चादिना कञ्चन कमपि बद्धमूलं बलीयांसं यतिं श्रावकं वा पक्षं सहायं, न तादृक्साहाय्यं विना तादृशाद्-आचार्यपदलाभसम्भवः। 'अक्षतकलिः' यत्किञ्चिन्निमित्तमात्रं प्राप्य शिष्यादिभिः सह नित्यमखण्डितकलहः 'प्राप्त' आसादित-[स्सन्]वान् सन् (?) तदिति विवेकिनां विडम्बनास्पदं 'आचार्यकं' आचार्यत्वं-सूरिपदमित्यर्थः। 'चित्रं' अद्भुतमेतत् 'चैत्यगृहे' देवभवने 'गृहीयति' गृहस्थवाचरति, यथा निजगृहे गृही शयना-सन-पान-सम्भोग-ताम्बूलभक्षणादिकं निश्शङ्कं समाचरति, तथाऽयमपि। तथा 'निजे' स्वकीये गच्छे 'कुटुम्बीयति' कुटुम्बवदाचरति, यथाहि गृहस्थः कुटुम्बे पर्वदिनेषु दानानुप्रदानादिषु प्रवर्त्तते, एवं एषोऽपि साधुसाध्व्यादि वर्गे तथा प्रवर्त्तमान एवमुच्यते। यदि वा आचार्येण हि स्मारणवारणादिपूर्वकं प्रत्युपेक्षणप्रमार्जनशिष्याध्ययनाध्यापनादिनोत्तरोत्तरगुणस्थानाधिरोपणेन स्वगच्छो नित्यमेवेक्षणीयः यथा दोषं च शिक्षणीय इति सिद्धान्तस्थितिः। यथा गृही द्रव्यार्जनगृहकर्मादिकरणदक्षं पुत्रादिकं बहुमन्यते तदन्यं चावमन्यते तथा गच्छमध्याद्विश्रामणादि शुश्रूषाकारिणं सदोषमपि भूषयते तदन्यं च सद्गुणमपि दूषयति, इति गृहिकुटुम्बप्रक्रियावर्त्तित्वात् तथा-अभिधीयत इति। तथा 'स्वं' आत्मानं 'शक्रीयति' शक्रमिव-पुरन्दरमिवाचरति, सहि नीचत्वात् तथाविधचैत्यद्रव्य-शिष्यश्रावकादि-समृद्धिदर्शनात् उन्मदिष्णुः शक्रोऽहमित्य-भिमन्यत इति। तथा कतिपयशास्त्रसिद्धान्तज्ञ तया 'बालिशीयति' बालिशानिव-मूर्खानिवाचरति 'बुधान्' विचक्षणान्, अहमेव सकलशास्त्रपारगामी, किममी अज्ञा विदन्तीति। तथा अतएव विश्वं 'वराकीयति' वराकमिव-रङ्कमिवाचरति। अयमाशयः-ईश्वरो हि कश्चित्प्रव्रज्य प्राप्ताचार्यपदः सन् निर्विवेकतया कथचित् चैत्यगृहादिषु गृहीयतीत्यादिकं विदधानोऽपि न तथा लोकानां चित्रीयते, गृहवासेऽपि लोकैस्तथा दर्शनात्, अयं तु रङ्कशिशुर्दीक्षित्वा सूरिपदासादनेन तथा कुर्वाणे जनानामुपहास-विषयतया महदाश्चर्यभाजनं, तदहो ! ! अत्यन्तमाचार्यादिअनुचितचैत्यगृहे गृही-यत्यादिना असच्चेष्टितेन श्रुतपथावज्ञा पापानां मलिनयति प्रवचनमिति वृत्तार्थः॥ १५॥

सम्प्रति पुत्रपित्रादिसम्बन्धं विनाऽपि हठाल्लिङ्गिकृतलोकवाहनोपालम्भद्वारेण श्रुतावज्ञां प्रतिपादयन्नाह—

यैर्जातो न च वर्द्धितो न च न च क्रीतोऽधमर्णो न च ॥१६॥

व्याख्या—यैः लिङ्गिभिरयं जनो न च जातो, जनेरान्तरर्भावितेनर्थत्वात्-न जनितः-पित्रादिरूपतया न जन्म लंभितः। चकाराः सर्वेऽपि समुच्चयार्था अवधारणार्था

वा। अथ माभूत् जातस्तथापि वर्द्धितो भविष्यति, एतावताऽपि बलात् तद्वाहनसिद्धिः अत आह–वर्द्धितो न चेति, एवमुत्तरपदेष्वप्याशङ्क्य योजना कार्या, वर्द्धितो–योगक्षेमादिसम्पादनेन शरीर–पोषं प्रापितः। न च 'क्रीतो' मूल्यदानेनान्यस्माद् गृहीतः। अधमर्णो न च, उत्तमर्णसकाशात् उद्धारादि प्रयोगेणार्थगृहीताऽधमर्णः। अत्र च यैरिति कर्तृतया सम्बन्धानुपपत्तेर्येषामिति सम्बन्धविवक्षया यच्छब्दो योज्य, अर्थवशाद्विभक्तिपरिणाम इति न्यायात्। तेन येषां लिङ्गिनामय जनोऽधमर्णोऽर्थधारयिता न भवति, एवमुत्तरत्रापि यथासम्भव येषामिति सम्बन्धनीय। तथा यैः 'प्राक्' पूर्वं दृष्टो ऽवलोकितो न च, अयमर्थः–ये लिङ्गिभिः स्वश्राद्धा दूरदेशवर्त्तित्वात् कदाचिदपि न दृष्टास्तेऽपि स्वगच्छग्रह प्रस्तरवादन्य गुरु वाचाऽपि न सम्भाषन्ते, तमेव गच्छगुरु ध्यायन्तः कालमति वाहयन्ति। 'बान्धवः' पितृव्य–भ्रातृव्यादिसम्बन्धभाग् न च येषां न च 'प्रेयान्' वल्लभतरो मैत्र्यादिसम्बन्धेन, न च 'प्रीणितो' दानज्ञानातिशयादिना तोषितः, तैरेव प्रागुक्तसम्बन्धाभावेन लोकवाहनयोग्यतारिक्तैर्लिङ्गिभिरेव। "एव इत्थ्यपयमिह परिभवे ईषदर्थे वा"। ततश्च महापराभवोऽय–यत् तादृशैरपि लिङ्गिभिर्लोको वाह्यत इति 'बलात्' हठेन, न तु प्रणयेन 'वाह्यते' वशीकृत्य स्वकार्याणि कार्यते 'अय' गच्छमहाग्रहगृहीतः प्रत्यक्षोपलभ्यमानो 'जनः' श्राद्धलोको 'नस्योतो' नासिक इव 'पशुवत्' वृषभादि इव लिङ्गिभिस्तूक्तसम्बन्ध विनाऽपि यदेव लोको वाह्यते तन्महा परिभव इति, ननूक्तसम्बन्धं विनाऽपि सद्गुरुत्वेन तेषा नस्तितपशुवल्लोकाः कार्याणि निर्मापयिष्यन्ति, न ह्यनुपकृत–परहितरतानां गुरूणां धर्मदानोपकारस्य प्रत्युपकारः कर्तुं शक्यते, अत आह–अत्यधमाधमैरिति, लोकलोकोत्तरगर्हिततम–साध्वीप्रतिसेवा देवद्रव्यभक्षण–सुनिहितपात–शासनोड्डाहप्रभृति–भूरिपापकर्मनिर्माणात् अतिशयेनाध मेभ्योऽपि–हीनजातीयेभ्योऽप्यधमैर्हीनैः, अतः कथमेषां सद्गुरुतया लोको वाहनीयो भविष्यति, अर्थवंविधैः एभिः कथ तर्हि वाहयितु लोकः पार्यते? अत आह–'कृतमुनिव्याजैः' प्रपञ्चचतुरतया विश्वासोत्पादनेन मुग्धजनस्य विप्रलिप्सया रचितशान्तरूप मासोपवासकरणादि छद्मभिः। अयमर्थः–एवमसमञ्जसकारिणोऽपि लिङ्गिनो विश्रम्भ हेतु तथाविधयतिरूपप्रदर्शनेन सुकरपथप्ररूपणेन च सुखलुब्धान् मुग्धान् प्रलोभ्य यथेच्छ वाहयन्तीति। अमुमेवार्थं समर्थयितु प्रकारान्तरेण लोकवाहनप्रतीकारमसम्भावयन् सविषाद वैधर्म्येणार्यां न्तरव्यासमाह–'नीराजक' निगतमहाप्रैश्वर्य–न्यायरक्षित–प्रजादुष्ट शिक्षादिदक्षता–विचक्षणभूप। किं राजसहितमपि नीराजकमिव नीराजकमुच्यते? हा इति विषादे, जग–द् भुवन, न धन्ययोदिता गुणभानि–राजनि मलाछोत्पादन कर्तुं लभ्यते।

अयमाशयः—यथा सगुणं राजानं विना तद्देशः प्रतिभूप-मलिम्लुचादिभिः उपद्रूयते एवं सम्प्रति प्रौढसातिशय-बहुजनापेक्षणीय-गणधरादि पुरुषसिंहविरहाच्छिद्रिभिरयं श्राद्धजनो बाध्यते इति वृत्तार्थः ॥ १६ ॥

अधुना लिङ्गिनां वैशसं दृष्ट्वाऽपि कदाग्रहात् तत्प्रयोजित-कापथात् अनिवर्त्तमानान्मूढान् दिङ्मूढत्वादिना विकल्पयन्नाह—

किं दिङ्मोहमिताः किमन्धबधिराः किं योगचूर्णीकृताः ॥ १७ ॥

व्याख्या—किं शब्दाः सर्वेऽपि विकल्पार्थाः, किममी जडा दिङ्मोहः—कुतश्चिद् दृष्टादि निमित्तात् प्राच्यादि दिक्षु प्रतीच्यादिभ्रमास्तं मिताः प्राप्ताः। अयमर्थः—यथा दिङ्मूढाः प्राची प्रतीचीत्वेनाध्यवस्यन्तो लोकेन युक्त्या ज्ञापिततत्त्वा अपि तदध्यवसायात न निवर्त्तन्ते, एवमेतेऽपि विदितकुपथदोषा अपि कुतोऽपि हेतोरनिवर्त्तमानाः तत्साम्यात्तथोच्यन्ते। किमन्धा—नयनहीना 'बधिरा' उपहतश्रवणाः, अन्धाश्च बधिराश्चेति द्वन्द्वः, ते किमन्धाः किं बधिरा इत्यर्थः। यथा अन्धा दृग्विकलत्वान्नस्पकपन्थानम् अजानाना अपथमपि सत्पथतयाऽवगम्य तत्र गच्छन्तो हितैषिणा तत्त्वं ज्ञाप्यमाना अपि स्वग्रहात् न निवर्त्तन्ते, यथा बधिराः श्रुतिविकलत्वादनाकर्णयन्तो दुष्टवैतालिकादि वचो निन्दार्थः स्तुत्यर्थतयाऽवगम्य तद्दानादौ प्रवर्त्तमानास्तत्त्वं बोधिता अपि स्वनिर्बन्धात् न निवर्त्तन्ते, एवमेतेऽपि सदोषमपि कुपथं स्वगच्छादिग्रहात् निर्दोषितयाऽवबुध्य ततोऽनिवर्त्तमानास्तथोच्यन्ते। एवमुत्तरपदेष्वपि भावनीयम्। तथा किं वशीकरणादिहेतुरनेकद्रव्यमेलकः पादप्रलेपादिर्योगः, तादृगेव नयनाञ्जनादिश्चूर्णं, योगश्च चूर्णं च, ते विद्यते येषामिति विग्रहे तदस्यास्तीतीन्। अयोगचूर्णितः योगचूर्णीकृता, अभूततद्भावे च्विः। मस्तकादिषु योगचूर्णक्षेपेण वशीकृता इत्यर्थः। यथा केनापि धूर्त्तेन क्षिप्तयोगचूर्णाः पुमांस आत्मनोऽहितैषिणमपि तं हितैषितया मन्यमाना केनापि तत्त्वं प्रत्याद्यमाना अपि योगादिप्रभावेण तद्वचनकरणात् न निवर्त्तन्ते, तथैतेऽपि कुपथादिति पूर्ववत्। किं 'दैवेन' प्रतिकूलविधिनोपहताः—सद्बुद्धिभ्रंशं प्रापिताः, तेहि विधिवशेन विपर्यस्तमतित्वात्—अकृत्यमपि स्तेयादिकं कृत्यतया मन्वानस्तत्त्वं प्रतिपाद्यमाना अपि दुर्दैवमहिम्ना ततो न निवर्त्तन्ते, तथैतेऽपि। किं अङ्गेति—पार्श्ववर्त्त्यामन्त्रणं, ठकिता—मन्त्रादिप्रयोगेण, स्वायत्तीकृता, यथाहि केचन केनापि दुर्मान्त्रिकेण वशीकरणमन्त्रेण तथाकृताः तद्वचनमत्यन्तं समीचीनतयाऽभ्युपगच्छन्तः तत्त्वमवगमिता अपि मन्त्रमहिम्ना न ततो निवर्त्तन्ते, एवमेतेऽपि। किञ्चेति पक्षान्तरे। 'ग्रहैः' भूतादिभिः 'अवेशिताः' कृतावेशा—विहितशरीरा-

धिष्ठाना इति यावत्, यथा भूताद्यधिष्ठिताः तदावेशात् विधेयापरिज्ञानेनाविधेयमपि पित्र-प्रहारादिक विदधानास्तवो निवर्त्यमाना अपि न निवर्तन्ते, एवमेतेऽपि सदसद्विवेक विकलतया कुपथात् न निवर्त्तन्त इति। अत्र च दिङ्मूढादि बहुविकल्पप्रदर्शनमाधुनिकप्रमाद लोकानामत्यन्तानिवर्त्य स्वगच्छाग्रहग्रस्ततरत्वज्ञापनार्थं। 'कृत्वा' विधाय 'मूर्ध्नि' पाद 'श्रुतस्य' सिद्धान्तस्य, सिद्धान्तोक्तातिक्रमेण निश्शङ्कतया स्वगुरुलिङ्गिप्रवर्त्तिता सन्मार्गपोषणमेव श्रुतमूर्ध्निपादकरण, यतः "नवि किंची" इत्याद्यागमशकलस्य इदमु त्तरार्द्ध-"एसा तेसिं आणा, कज्जे सचेण होयव्व" इति। अस्य चायमर्थः-एषा भग-वतामाज्ञा, यत्कार्ये सत्येन भवितव्य, कोऽर्थः? कार्य-ज्ञानादित्रय, सत्यं च सयम, यथा यथा ज्ञानादिक सयमश्चोत्सर्पेत्तथातथा यतिना निर्माय यतितव्य, यदाह-"कज्ज नाणाईय, सच्च पुण सजमो मुणेयव्वो। जह जह सो होइ थिरो, तह तह कायव्वय कुणसु ॥ १ ॥ दोसा जेण निरुज्झंति, जेण खिज्जति पुव्वकम्माइ। सो सो मुक्खोवाओ, रोगाव त्थासु समण व ॥ २ ॥" न चागमे सुखलिप्सया किञ्चित्प्रवृत्त, किं तर्हि? यावता विना सयमज्ञानादि यात्रा नोत्सर्पति तावन्मात्रस्यैव विहितनिवारणस्य निवारित विधानस्य च भगवद्भिः पुष्टालम्बनेन कादाचित्कतया तत्रानुज्ञानात्। एव च कथ श्रुत स्यान्यथा? भवदसन्मार्गस्य चौद्देशिकभोजनादेः सर्वस्यापि सार्वदिकतया निश्चि-तत्वेन केवलसुखानुभवोद्देशेनैव प्रवृत्तेः। तथा च तस्य महासावद्यत्वेन ज्ञानादियात्रा दायत्वमागतवत् कथ प्रामाण्यमित्याह-अकलितगुणदोषविभागः, स्वपक्षानुरागो यस्या मानानां यद्भगवन्मतस्याव्यवस्थाऽऽपादनेन स्वमतस्योत्कर्षप्रदर्शन। किञ्च-तीर्थंकर-पूर्वधरादिगातिशयमहापुरुषविरहे सम्प्रति सिद्धान्त एव नः प्रमाण। यदुक्त-"एत्थ वि अम्ह सरण, ताण परस्स गई पईवो य। भयव सिद्ध तो चिय अविरुद्धो इह इह्रुदि हेहिं ॥ १ ॥" तस्य च प्रामाण्यानभ्युपगमे तत्प्रणेतुर्भगवतोऽप्यप्रामाण्याभ्युपगम प्रसङ्गेन भवतस्तन्मूल रजोहरणादिवेषपरित्यागापत्तिः, तथा चायं सुखाशया भव त्कल्पितः पन्थाः सर्वोऽपि निरुध्यते, एव च लिङ्गिनां श्रुतस्य मूर्ध्नि पादकरणमनु-चितमपि ज्ञात्वा यदमी तत्पक्षगोचराः श्रावक जनाः सुदृढगच्छाग्रहग्रन्थयो 'दृष्टेष्ट दोषा अपि' साक्षात्कृतगुरुतरपूर्वादिवकुपथापराधा अपि, अदृष्टदोषा हि विवेकिनोऽपि कुपथादपि न निवर्तितुमीशते, किं पुनरन्य इत्यपि शब्दार्थ। 'व्यावृत्ति' अपसरण 'कुपथात्' कुमार्गात् 'नद्धाः' स्वहिताहितविवेकशून्या' 'न दधते' न चेतसि धार यन्ति न इति तात्पर्य'। न केवल व्यावृत्ति स्वय न दधते 'असूयन्ति च' ईर्ष्यन्ति, गुणेऽपि दोषमारोपयन्तीति यावत्। यः सद्गुणये। एवा कुपथव्यावृत्ति करोति, एतत्

कृत् तस्मै, "क्रुध-द्रुहेर्ष्येत्यादिना" चतुर्थी, महागमनाय कस्मैचित् कुपथव्यावृत्तिविधायिने। अत्र चोत्तरवाक्यार्थगतत्वेन प्रयुज्यमानो यच्छब्दस्तच्छब्दोपादानं विनाऽपि तदर्थं गमयति, तेनायमर्थः–तेषां हि दृष्टदोषत्वात् कुपथात् तावत्स्वयं व्यावृत्तिः कर्तुं युक्ता, अथ कुतोऽपि हेतोः स्वयं न व्यावर्त्तन्ते तदा तद्व्यावृत्तिकारिणि प्रमोदो विधातुं सङ्गतः, यत् पुनरमी द्वयमध्यादेकमपि कर्तुं नोत्सहन्ते, प्रत्युत कुपथनिवृत्तिविधायिनि कस्मिंश्चिन् एकस्मिन्नपि क्षुद्रोपद्रवाय यतन्ते, तत्किममी दिङ्मोहमिता इत्यादि योज्यं, तेन-एतदुक्तं भवति–दिङ्मूढादयो हि हितैषिणा व्यावृत्तमाना अपि दिङ्मोहत्वादव्यावृत्ति-मात्रमेव न कुर्वन्ति, एते तु न केवलं कुपथात् न व्यावर्त्यन्ते यावता कुपथव्यावृत्तिकारिणे-अभ्यन्त्यपीति तेभ्योऽप्यमी कुत्सिता इति वृत्तार्थः ॥ १७ ॥

साम्प्रतं लिङ्गिदेशनया श्राद्धैरविधिकृतस्य जिनमज्जनस्यापि दुर्गतिपातहेतुत्व-प्रतिपादनद्वारेण श्रुतपथावज्ञां दर्शयन्नाह—

इष्टावाप्तितुष्टविटनटभटचेटकपेटकाकुलं ॥ १८ ॥

व्याख्या—'जैनमज्जनं' भगवद्बिम्बस्नात्रं कर्तृ 'जनयत्येव' सम्पादयत्येव, नतु कदाचित् न जनयत्यपीत्येवकारार्थः। 'अघपङ्के' पापकर्दमे 'निमज्जनं' ब्रुडनं कर्म, तत्कर्त्तृणामिति शेषः। अथ कथं पुण्याय विधीयमानं जिनस्नात्रं पापपङ्कनिमज्जनाय प्रभवति इति आह–'अविधिना' सिद्धान्तोक्तक्रमविपर्ययेण, प्राक्तनविशेषणान्यथाऽनुप-पत्त्या रात्राविर्त्यर्थः, सिद्धान्ते हि रजन्यां जिनस्नात्रं निवारितमतस्तत्र तत्कुर्वतां कथं न पातकमित्यर्थः। अथ कं दोषमभिप्रेत्य सिद्धान्ते रात्रिस्नात्रनिवारणमिति दोषप्रदर्शनाय हेतुगर्भं विशेषणत्रयं मज्जनस्याह–इष्टावाप्ति इत्यादि, इष्टाया–वल्लभाया मज्जनदर्शनमिषे-णागताया 'अवाप्ति'मेलकस्तया तुष्टा–निश्शङ्कमत्राद्य नः सुरतलीला प्रवर्त्स्यतीति धिया मुदिता 'विटा' वेश्यापतयः 'नटा' नाटकाभिनयकलोपजीविनः 'भट्टा' शस्त्रादिकला-जीविनः 'चेटका' मासादि–नियमितवृत्तिग्राहिणः, एषां 'पेटकं' समुदायस्तेना–'कुलं' क्षुभितं, प्रेयसी प्राप्त्या सात्त्विकभावेनाकुलीकृतविटादिजनाकीर्णत्वात् मज्जमप्युपचारादाकुलं, तथा 'निधुवनविधिनिबद्धदोहदा' मोहनविलसितविहिताभिलाषाः या 'नरनार्यः' पुरुष-योषितः तासां 'निकरेण' निचयेन 'सङ्कुलं' व्याप्तं। नारीणां प्रायो निधुवनार्थमेव मज्जनाव-लोकनछद्मना तत्र गमनात्, तथाविधव्याजमन्तरेण रात्रौ तत्राप्यागमनासम्भवात्, तथा-विधव्याजेन चान्यत्र गन्तुमशक्तत्वात्। अत एव 'रागः' कश्चित् परस्त्रीं प्रत्यभिष्वङ्गः 'द्वेषः' स्वस्त्रीमन्येन सह सङ्गच्छमानां पश्यतः तज्जिघांसा 'मत्सरः' कश्चित्सौभाग्येन कयाचित्

सङ्घटमानमालोकयतः स्वयं च तां कामयमानस्य तत् सौभाग्यव्ययेच्छा 'ईर्ष्या' स्वयं-छमामन्येन सार्द्धं सलपन्तीमीक्षमाणस्य असहिष्णुता, ततो रागश्चेत्यादि द्वन्द्वः, ताभिः 'घनं' सान्द्र, अत्रापि-रागादिमल्लोकघनत्वात् मज्जनमभ्युपचारात् तथा, कामुकलोकमेलके हि जिन-गृहेऽपि निशायां रागादय एवोज्जृम्भते, न स्वल्पापि धर्मभावना, तस्मात् दिन एव स्नात्र धर्मार्थिनां श्रेयो, न रात्राविति। अत्र कैश्चित् उच्यते-रात्रिस्नात्रे न कश्चिद्दोषः, जिनजन्ममज्ज नस्य शक्रेण तथाविधानात्, तथाहि-मर्त्येऽपि जिनेन्द्रा रात्रियामद्वयमध्य एव जायन्ते, तदैव सुरेन्द्रा मेरुगिरिशिखरं नीत्वा तान् स्नपयन्तीति श्रूयते, तस्य च तथा स दोषत्वे शक्रः तथा न कुर्वीत, तस्मादिन्द्रा चरितप्रामाण्यात् निशायामपि स्नपन विधातव्यमिति चेत् न शक्रो जिनमज्जन मेरौ करोतीति मन्यामहे, न तु यामिनीयामद्वितीय इति, मेरु-शिखरे सूर्योदयास्तमयाभावेन रात्रिदिनव्यवहाराभावात्। कथं तर्हि प्रकाशाभावे तत्रे न्द्राणां जिनमज्जनादिविधिरिति चेन्न, रत्नशृङ्गस्य निरस्ततमःस्तोममयूषद्योतेन विमल-माणिक्यशिलामरीचिनिचयेन देवमहिम्ना च निरन्तर भासुरत्वात्। एवं च इन्द्राचरिता-वष्टम्भेन कथं रात्रिस्नात्र समर्थ्यमान सङ्गच्छते ?, श्राद्धानां त्रिसन्ध्य जिनपूजाया दिन कृत्यत्वेन सिद्धान्तेऽभिधानात्। ततश्च " वित्ति-किरिया विरुद्धा " इत्यादेरयमर्थो-यः प्रभातादि-सन्ध्यायां वृत्तिनिमित्तवाणिज्यादि व्यग्रत्वात् कथञ्चित् देवपूजाया न व्याप्रियते स दिनमध्ये एव मुहूर्त्तादिना सन्ध्यातिक्रमेऽप्यपवादतः पूजां करोतु, न पुनरस्यायमर्थो, यदुतापवादेन रात्रौ करोति, दिनकृत्यता हानिप्रसङ्गात् प्रभूतायतनाकरणादि दोषप्राप्ते-श्चेति। एतेन रात्रौ जिनसदने बलि दान नन्दि प्रतिष्ठादि-विधानमपि निरस्त, प्रायो मज्ज-नेन समानयोगक्षेमत्वात्, निशिस्नात्रोक्तदोषाणां बलिदानादावपि सम्भवात्। तथाहि-दीक्षाद्यर्थं नन्दिकरण, दीक्षा च स्थूलसूक्ष्मप्राणातिपातविरतिलक्षणा, रात्रौ च प्रकाश निमित्तज्वलितभूरिदीपरूपतेजस्कायिकजीवानां स्वय शरीरस्पर्शनेन व्यापादनात्, प्रदी पेषु च सतत निपततां पतङ्गादि जन्तूनां व्यापत्तिभावात्। कीदृशी दातृगृहीत्रो' सर्वविरतिः ?। शिष्यस्य दीक्षाप्रथमक्षणादारभ्य प्राणातिपातप्रवृत्ते', दीक्षादातुश्च दोष-सङ्ख्याऽपि वक्तु न शक्यते, तच्छिष्यया तावज्जन्तुजातव्याघातप्रवृत्ते.। तदहो !! मूढा ! एतावन्त पापकलापमात्मन्यारोपयन्तो भाविभवभ्रमणात् मनागपि न बिभ्यन्तीति। किञ्च दिवसे दीक्षादिलग्नबलाभावे रात्रौ च तद्भावे विहारक्रमवदपवादेन कदाचिद्रात्रावपि नन्दि विदधतां को दोष' ? इति चेन्न, विहारक्रमस्यापवादेन रात्रावपि प्रतिपादनात् तत्र कदाचित् तत्करण युक्त, नन्दिविधानस्य चापवादेनाप्यागमे रात्रावनभिधानात् कथं तद्वि-धान तत्र सङ्गच्छेत् ?। किञ्चापवादिक कल्पानां रात्रिविहारक्रमादीनां सर्वेषां प्रायश्चित्त-

ममिहितमागमे, न च निशि नन्दिविधानस्य ततोऽवगम्यते–नास्त्यपवादेनापि रजन्यां नन्दिविधानं, एवं निशि जिनप्रतिमा प्रतिष्ठायामपि सकलमेतद् दूषणजातं विचिन्त्य वाच्यं, तदुक्तं–" प्रादुष्प्रदोषपोषायां, दोषायां साधयन्ति ये। जिनबिम्बप्रतिष्ठां ते, प्रतिष्ठां स्वस्य दुर्गतौ ॥ १ ॥" तदेवं दोषकलापदर्शनाद्रात्रौ मज्जनादि विधायिनां पापपङ्के निमज्जनं भवतीति व्यवस्थितं। इदं वक्ष्यमाणं च वृत्तद्वयं द्विपदीच्छन्द इति वृत्तार्थः ॥ १८ ॥

साम्प्रतं प्रसङ्गेन मज्जनात् अन्यस्यापि धर्मकृत्यस्य संसारनिमित्तत्वं प्रकटयन्नाह–

जिनमतविमुखविहितमहिताय न मज्जनमेव केवलं ॥ १९ ॥

व्याख्या—' जिनमतविमुखविहितं ' भगवदागमवैपरीत्य–निर्मितं ' मज्जनमेव ' स्नपनमेव ' केवलं ' एकं ' अहिताय ' संसाराय न भवति–स्नानमेवैकं अविधिविहितं संसारकारणमिति नास्ति, किन्तु किं तर्हि ? तप्यते धातवोऽशुभकर्माणि चानेनेति तपोऽनशनादि, तथा ' चरित्रं ' सर्वविरतिः ' दानं ' पात्रेषु न्यायार्जितशुद्धभक्तादिवितरणं, आदिशब्दात् विनयवैय्यावृत्त्यादिग्रहः, ततस्तपश्चेत्यादि द्वन्द्वगर्भो बहुव्रीहिः। ततश्चैवमाद्यप्यनुष्ठानं जिनमतवैपरीत्य विहितं, न केवलं मज्जनमित्यपि शब्दार्थः। ' न खलु ' नैव 'जनयति' सम्पादयति 'शिवफलं' मुक्तिरूपं फलं। अथ कस्मादेवं ? इत्यत आह–'हि' यस्मात् 'अविधिविधिक्रमात्' सिद्धान्तानुक्त–तदुक्तप्रकारेण ' जिनाज्ञाऽपि ' भगवच्छासनोक्तानुष्ठानमपि ' अशुभशुभाय ' अश्रेयः श्रेयसे, द्वन्द्वैकवद्भावादेकवचनं। ' जायते ' सम्पद्यते, यथासंख्येयनात्र योजना, तेनायमर्थः–किल जिनपूजा–तपःप्रभृतिप्रवचनप्रसिद्धं जिनाज्ञा, भगवता निःश्रेयससाधनत्वेनाज्ञापितत्वात्। तथा च तदप्यविधिक्रमेण–"काले सुइभूएणं" इत्याद्युक्तविधिविपर्ययेण क्रियमाणमशुभाय भवति, विधिक्रमेण तु सन्ध्यात्रया–राधनशुचिभूतत्वादिना तदेव शुभाय। विध्यविधिभ्यां भगवदाज्ञाऽऽराधना–नाराधनयोरेव मोक्षसंसारफलत्वात्। किं पुनरित्यादि वाक्यं काक्वा योज्यं। अत्र च किमित्याक्षेपे, पुनरिति वाक्यभेदे, इति प्रकरणे। तेनैषा प्रकृतारात्रिमज्जनादिका क्रिया ' विडम्बनैव ' प्रवचनापभ्राजनैव–लोकोपहासास्पदं, न त्वेषा जिनाज्ञाऽपीत्येवकारार्थः। ' अहितहेतुः ' संसारनिबन्धनं ' न प्रतायते ' न विस्तार्यते, किन्तु अत्रहितहेतुत्वेन प्रख्याप्यते एव, इदमुक्तं भवति–जिनाज्ञाऽपि तपःप्रभृतिका आवश्यादिका–षाकर्मभोजनादिका वा यदा अविधिना विधीयमाना भवफला तदा किं पुनरस्या विडम्बनायाः–सर्वथा जिनवचनबाह्याया रात्रिमज्जनादिकाया वक्तव्यं ? सुतरामेषा भवहेतुरेव, अतोऽहितहेतुत्वेन

प्रख्याप्यते येन सा तथा प्रख्याप्यमाना कस्यापि पुण्यात्मनः स्वतो निवर्त्तनाय प्रभव तीति सूत्रार्थः ॥ १९ ॥

इदानीं निर्वाणकारणमपि निर्माण जिनगृहादि निर्मापण गृहिण' कुमतादि निर्देलेशस्याप्यनुबन्धात् भवहेतव भवतीत्येतत् प्रदर्शनायाह—

जिनगृह–जिनबिम्ब–जिनपूजन जिनयात्रा–दि विधिकृत ॥ २० ॥

व्याख्या—'जिनगृह' जिनभवन 'जैनबिम्ब' भागवती प्रतिमा 'जिन पूजन' भगवत्प्रतिमायाः कुसुमादिभि अभ्यर्चन 'जिनयात्रा' जिनान् प्रतीत्या–ष्टाह्निका कल्याणक–रथनिष्क्रमणादि महामहकरण, ततो जिनगृह चेत्यादिद्वन्द्वगर्भो बहुव्रीहि', एवमुत्तरपदयोरपि । आदिग्रहणात् जिनवन्दनप्रतिष्ठादिग्रहः । इह चासकृज्जिनपदोपादान भगवतोऽत्यन्तभक्तिगोचरतया तदुद्देशेन विधिना जिनगृहनिर्माणस्य परममुक्त्यङ्गत्व ख्यापनार्थं, एवमादि धर्मकर्मजातमिति शेष. । 'विधिना' श्रुतोक्तेन प्रकारेण 'कृत' निर्मापित । तथाहि–जिनगृहनिर्मापणविधि' शुद्धभूमिपरिग्रहादिकः, जिनबिम्बे विधिना निर्मापिते प्रतिष्ठापिते चाय पूजनविधिः–सन्ध्या त्रये विधिना शुचिभूत्वा भगवत् बिम्ब श्रद्धावान् पुष्पादिभिरर्चयति, तथा तत्र च कल्याणकादिदिनेषु यात्रा प्रवर्त्तयते, तत्र चाय विधि.–यथाशक्ति दान–तपश्चरण–शरीरविभूषा–जिनगुणगान–नादिश्रादिकरण । तथा 'दान'अभयदानादि 'तपो'ऽनशनादि 'व्रतानि' स्थूलप्राणातिपातविरमणादीनि । आदिशब्दात्–विचित्राभिग्रहः । ततो पन चेत्यादि द्वन्द्वः । तथा 'गुरोः 'धर्माचार्यस्य 'भक्तिः' शुश्रूषा आगच्छदभिमुखगमनोत्थिताऽभ्युत्थान–गच्छदनुगमन–विश्रामणा–विशुद्धभक्तपानादि दानचित्तानुरञ्जनादिकाः।' श्रुतपठन' सिद्धान्ताध्ययन। आदिग्रहणात् तदर्थश्रवणमननादिग्रहः। एतच्च विवेकिना विशेषेण विधेय, एतत्पुरस्सरत्वात्सकलप्रागुक्त जिनगृहादिकरणविधिप्रतिपत्तेः। यदाह–"अन्नेसि पवित्तीए, निवधण होइ निहिसमारमो। सो सुत्ताउ नज्जइ, तो त पढम पढेयव ॥ १ ॥ सुत्ता अत्थे जत्तो, अहिगयरो नवरि होइ कायव्वो । इत्तो उभयविसुद्धत्ति, सुयग केवल सुत्तमित्ति ॥ २ ॥" एतदन्तरेण समस्त–स्यापि क्रियाकलापस्यान्धमूक साम्यापत्तेः। ततो गुरुभक्तिश्चेत्यादि द्वन्द्व', चः समुच्चये। आदृत मयहुमाण, न स्वयहलया । एतत्सकल जिनगृहादि–दानादि–गुरुभक्त्याद्यनुष्ठान, किमित्याह–'स्याद्' भवेत् इह प्रवचने, अनभिमतकारीति सम्बन्ध। कस्मात् अत आह–कुमतत्यादि, तत्र 'कुमत' परतिथिमपामिहित क्रियाकदम्बक श्राद्धचन्द्रसूर्योपराग–

सङ्क्रान्ति–माघमाला–प्रपादानादि, कुगुरु–उत्सूत्रदेशनाकरणप्रवणः सन्मार्गदूषणपरायणो धार्मिकजनक्षुद्रोपद्रवतत्परः सुखलोलतया यतिक्रियाविकलो जनविप्रतिलिप्सया दुष्कर-क्रियानिष्ठोऽपि वा लाभपूजाख्यातिकामः कुत्सित आचार्यः, कुग्राहः–सिद्धान्तबाह्य–स्व-मतिकल्पित–स्वाभ्युपेतासत्पदार्थसमर्थ–नानुष्ठानगोचरो मानसोऽभिनिवेशः,कुबोधो-ऽन्य-था व्यवस्थितस्य भगवदागमार्थस्याज्ञानाद्विशिष्टसम्प्रदायाभावाद्वाऽन्यथा परिच्छेदः, कुदेशना–श्रुतोक्तार्थानां संशयादज्ञानात् मिथ्याऽभिनिवेशाद्वा वैपरीत्येन प्ररूपणं, अत्र च कुगुरुग्रहणेन कुदेशनालाभेऽपि पृथगुपादानं तस्याः सकलेतरदोषेभ्यो महत्त्वज्ञाप-नार्थं, ततः कुमतं चेत्यादि द्वन्द्वः, तासामंशो–लेशस्तस्मात्, आस्तां कुमतादिभ्यः समग्रेभ्यः, किन्तु तेषामंशमात्रादपि ‘ स्फुटं ’ व्यक्तं निश्चितमिति यावत्, अनभिमत-कारि–अनिष्टविधायि दुरन्तसंसारकान्तारनिरन्तरपर्यटनकारणमित्यर्थः । ननु कथमेतानि गरीयांसि धर्मकृत्यादि लेशमात्रेणापि प्रतिरुद्ध्यन्ते ? नहि मृणालतन्तुना दन्तिनः प्रति-बध्धुं पार्यन्त इत्याशङ्क्य विवक्षितार्थप्रसाधनानुगुणमुपमानमाह–‘ वरभोजनमिव ’ स्निग्ध–मधुर–सुस्वादजेमनमिव, इवेत्युपमानद्योतकमव्ययं । ‘विषलवनिवेशतो’ गरलकण-प्रक्षेपात् । अयमर्थः–ईदृशी हि विषकणस्यापि पारिणामिका शक्तिर्यया हृद्यमपि बह्वपि भोजनं क्षणादेव सकलमसौ स्वात्मभावेन परिणमयति, तथा परिणमितं च तत् भुज्यमान-मपायाय जायते यथा, तथा कुमतादिदेशस्यापि मिथ्यारूपतत्वात्–एवंविधो महिमा, येन महियोऽपि जिनगृहविधानादि धर्मकर्मस्वस्वरूपतया भावयति, तद्भक्तिं च तद्विधीय-मानमपि संसाराय सम्पद्यत इति, अत एव सम्यक्त्वशुद्धिहेतवे कर्त्तव्यतया अभिहिता-न्यप्येतान्यसमञ्जसवृत्त्या क्रियमाणानि तदभावापादकत्वेन श्रूयन्ते, यदाहुः श्रीहरिभद्र-सूरयः–“ पाएणणंत देउल जिणपडिमा कारिया उ जीवेहिं । असमंजसवित्तीए, न य सिद्धो दंसणलवो वि ॥ १ ॥ ” तदेवं विषलवसंवलितभोजनोपमानेन जिनगृहादिविधा-नस्य कुमतादि लेशसंस्पर्शिनोऽप्यभिमतकारित्वं व्यवस्थितमिति वृत्तार्थः ॥ २० ॥

अधुना मुग्धजनाकर्षणनिमित्त–जिनबिम्बप्रदर्शनादि द्वारेण लिङ्गिनां लोकप्रतारणं दर्शयन्नाह—

आक्रष्टुं मुग्ध–मीनान् बिडिश–पिशितवत्–बिम्बमादर्श्य जैनं ॥ २१ ॥

व्याख्या—आक्रष्टुं मुग्धमीनान् जैनबिम्बमादर्श्य नाम जैनैर्जनोऽयं वञ्च्यते इति सम्बन्धः । तत्राक्रष्टुमिति स्ववशमानेतुं, न तु पुण्यमर्जयितुं, मुग्धा–हेयोपादेयविचार-

शून्यतया धर्मश्रद्धालवः त एव जडप्रकृतितया स्वहिताहितपरिज्ञानवैकल्यभाषम्मात् मीनाभत्वयास्तान् 'बिम्ब' प्रतिमां 'जैन' भागवन्त 'आदर्श्य' दर्शयित्वा, यथा–भो भव्याः ! ऐहिकामुष्मिकसुखविधानदक्षमिदमर्हद्बिम्बं, तत् पूजयत भक्त्येति सामान्यतोऽथवा भव-त्पूर्वजै एतद्बिम्बमार्हतं निर्मापित, ते चेदमेव प्रत्यहं नियमेनापूपूजन्, ततो भवद्भिरपीद मेव विशेषेण पूजनीयं, तथाऽर्हद् विम्बनिर्मापणमेव सम्प्रति भवजलधिनिपतज्जन्तुतारणा यालमिति भवद्भि स्वश्रेयसे नवीन भगवद्बिम्बं स्वनाम्ना विधापनीयमिति विशेषतो मुग्धजनपुरत. प्रज्ञाप्येत्यर्थ. । किल यतिना देशनाद्वारेण जिनबिम्बार्चनादे–गृहिपुर फलमुपवर्णनीय, तत्फललिप्सया तदनुसारेण गृहिण स्वयमेव तत्करणादौ प्रवृत्तेः, न तु साक्षात् तन्निर्माणनिर्मापणयोरुपदेशो दातव्यः तदुपदेशस्य सावद्यतया यतेर्निषेधात्, लिङ्गि नस्तु कथमाजन्मामी गृहिणोऽस्माकं वश्या भविष्यन्तीति धिया ऐहिकमेव स्वार्थं केवल चिन्तयन्तो धूर्ततया पूर्वपुरुषसम्बन्धितादि क्रमेण मुग्धेभ्यो जिनबिम्बमादर्शयन्ति, ते तु मुग्धत्वात् तदाशयमनवबुध्यमाना ऋजुश्रद्धालुतापूर्वमवश्यस्नेह–स्वकारित–ममतादिना तत्र जिनबिम्बादौ नित्य द्रव्यं व्ययते, लिङ्गिनश्च तदुपयुञ्जते स्वेच्छयेति भवति तदाकर्षणार्थं लिङ्गिनां जिनबिम्बदर्शनमिति । किमिवेत्याह–'बिडिश' मत्स्यवेधन, तदग्रे मत्स्यविलो भनाय स्थापित 'पिशित' मास, तद्वत् । वतिरुपमाने, तदिव । यथा धीवरा मत्स्याकर्ष-णाय बिडिशाग्रे पिशित स्थापयन्ति, ते च तल्लोलतया स्वापायमागामिनमविभावयन्तो गम्भीरादपि नीराशयान्निर्गत्य मुग्धत्वात् तत्र विलीयमाना बध्यन्ते, एव लिङ्गिनोऽपि मुग्ध जनानां स्ववश्यताविधानायोक्तविधिना भगवद्बिम्बमादर्शयन्ति, न तु ससारनिस्तरणाय। ननु कथ जिनबिम्बबिडिशपिशितयोरुपमानोपमेयभाव ? समानगुणयोरेवोभयोरलङ्कार ग्रन्थेषूपमानोपमेयभावप्रतिपादनात्, महाकविकाव्येषु तथैव दर्शनात्, अत्र तु जिन-बिम्बस्य सकलत्रिभुवनातिशायिन सर्वोपमातीतत्वात–अत्युत्तमवस्तूपमायोग्यत्वाद्वा, बिडिशपिशितस्य च सर्वात्यन्तहीनत्वात्कथ तेनोपमा ?, उत्तमभावस्यापि हीनभावेना प्युपमानोपमेयभावो न युक्त, किम्पुन सर्वोत्तमस्यात्यन्ताधमेन ?, एव च जिनबिम्बस्य बिडिशपिशितेनोपमानोपमेयभावप्रदर्शने कवेर्महापापप्रसङ्ग, तस्मन्नैथा नायमुपमानोप मेयभावो घटां प्राञ्चतीति त(न्चे)न्न । लोकाकर्षणेन स्वनिर्वाहहेतोर्लिङ्गिपरिगृहीतस्य जिन बिम्बस्योत्तमस्याप्यसदुपाधिवशात् दुष्परिवारपरिवृतराजादरिव वाञ्छितफलासाधक-त्वात् हीनताऽध्यारोपेणोपमानेन साम्यापादनादुपमानोपमेयभावोपपत्ते । अत्र चापवित्रेण बिडिशपिशितेनोपमान लिङ्गिपरिगृहीतस्य जिनबिम्बस्यात्यन्तहेयता ज्ञापनार्थं,आगमेऽ

तिहयस्याधाकर्मादेः गोमांसादिनैवोपमानोपमेयदर्शनादिति युक्तमुक्तं 'बिडिशपिशितवद्- 'बिम्बमादर्श्यजैन'मिति । साम्प्रतं प्रकृतमुपक्रम्यते-तथा 'तन्नाम्ना' जिननामधेयेन- भगवद्भाण्डागारनिमित्तमेते निर्माप्यन्ते, नास्मन्निमित्तमिति व्यपदेशेन 'रम्यरूपान्' रुचिररचनया दृष्टबन्धनया च मनोहराकारान् 'अपवरका' अन्तर्गृहा 'मठा' निलय-विशेषास्ततो द्वन्द्वस्तान् 'स्वेष्टसिद्ध्यै' वयमेवाजन्मसुखेन वत्स्याम इत्यात्माभिमतनिष्प-त्तये 'विधाप्य' कारयित्वा, ते हि शठाः स्वनिमित्तमपवरकादीन् निष्पादयन्ति मुग्धाश्च जानते-जिननिमित्तमित्यहो !! एतेषां जिनभक्तिरिति, तेषु ते रज्यन्ते तैश्चोपजीव्यन्त इति वञ्चनप्रकारः। तथा 'यात्राः' पित्राद्युद्देशेन भवद्भिरत्राष्टाह्निका कर्त्तव्या, अमुष्मिन्त्रा मासादावमुना श्राद्धेन श्रीमत्यत्र देवगृहे यात्राः कृतास्तस्माद्भवद्भिरपि तथैव विधेया । तथा 'स्नात्रं' श्राद्धपक्षादिषु पित्रादेः श्रेयसे युष्माभिरत्र स्नात्रं कर्त्तव्यमित्युपदेशव्याजेन यात्रास्नात्रविधापनं, ततो द्वन्द्वः । आदिशब्दाच्छ्रुतानुक्तपर्वग्रहः । तदादय 'उपाया' मुग्धविप्रलम्भनप्रकारास्तैः । ननु कथमेवंविधयात्रादीनां मुग्धजनप्रतारकत्वं ? यावता यथातथा भगवत्पूजायाः कुशलानुबन्धहेतुत्वादिति चेन्न, एवं हि लोकोदाहरणप्रामाण्येन भगवत्पूजाविधाने भगवतोऽप्रामाण्यो(प)पादनेन मिथ्यात्वादिप्रसङ्गात्, यदुक्तं- "जिट्ठम्मि विज्जमाणे, उचिए अणुजिट्ठपूअणमजुत्तं । लोगाहरणं(च) व तहा, पयडे भगवंतवयणम्मि ॥ १ ॥ लोगो गुरुतरगो खलु, एवं सइ भगवओवि इट्ठोत्ति । मिच्छ-त्तमो य एवं एसा आसायणा परमा ॥ २ ॥" तथा 'नमसितकं' उपयाचितकं-भवता-मिदानीमीदृगुपद्रवः समुपस्थितः तस्माद्भवद्भिस्तन्निवृत्तये जिनगोत्रदेवताऽम्बिकादिशा-सनसुराणामियद्द्रव्यमेषणीयमिति गृहिणः प्रतिजिनाद्युद्देशेन वित्तव्ययविधापनमिति यावत् 'निशाजागर' उपसर्गवर्गोपशमनाय प्रवचनदेवतादीनां पुरतो बल्यादिस्थापन-गीत-वाद्यलास्यपुरस्सरं सकलरात्रिजागरणं । ततो द्वन्द्वः । आदिग्रहणादन्येषामपि शान्तिकपौष्टिकानां सङ्ग्रहः । तदादीनि 'छलानि' छद्मानि-लोकोपजीवनार्थमागमान-भिहितत्वेन विलोभननिमित्तानीति यावत्, तैः करणभूतैः, चशब्द उक्तवचनप्रकार-समुच्चये । श्रद्धालु-र्विवेकविकलधर्मेच्छावान्, विवेकिनो हि प्रायेण नैवंविधैः प्रतारयितुं पार्यन्ते । 'नामतः' संज्ञामात्रेण जैनै-र्जिनदेवतैर्न तु क्रियया, भ्रष्टाचारत्वात्तेषां, तेन लिङ्गिभिरित्यर्थः । 'शठैः' प्रपञ्चप्रपञ्चनचतुरैः, छलित इवेत्युपमानं, यथा 'छलितः' शाकिन्यादिभिर्वशीकृतः तथाविधचैतन्यराहित्यात्सुखेन वञ्चयितुं शक्यते, तथाऽयं-एष 'जनः' श्राद्धलोको हा !!! इति विषादे 'वञ्च्यते' विप्रलभ्यते, महानयम् अस्मच्चेतसि विषादो-यद्धर्मार्थी लोको धूर्त्तैः स्वार्थं वञ्चयित्वा दुर्गतौ पात्यत इति वृत्तार्थः ॥ २१ ॥

इदानीम् अत्युच्छृङ्खलानामपि नाम जैनानां दशमाश्चर्यानुभावात् अभ्युदय स्व विषादपुरस्सर दर्शयन्नाह—

सर्वत्राऽस्थगिताश्रवा स्वविषयव्यासक्तसर्वेन्द्रिया, ॥ २२ ॥

व्याख्या—'सर्वत्र' लोकममक्षममक्ष च, आश्रवति-सञ्चिनोति जीवः कर्म भिरित्याश्रवाः पञ्च प्राणातिपातादयः ततश्चाऽस्थगिता-अनिरुद्धा आश्रवा यैस्ते तथा। स्वविषयेषु आत्मग्राह्येषु रूप-रस-गन्ध-स्पर्श-शब्देषु 'व्यासक्तानि' उपभोगप्रवणानि 'सर्वेन्द्रियाणि' सकलकरणानि-चक्षु-रसन-घ्राण-त्वक्-श्रोत्राणि येषां ते तथा, यतिना हि निगृहीतेन्द्रियेण भवितव्य, अन्यथा प्रव्रज्याया जीवनमात्रतापत्तेः। तथा गौरवाणि' आत्मन्युत्कर्षप्रत्ययहेतवोऽध्यवसायविशेषास्तानि च ऋद्धिरससाताऽतिरेक-हेतुकत्वेन कारणे कार्योपचारात्-रिद्धिरससातसंज्ञान्येव त्रीणि, तैश्चण्डाः-तत्साहाय्येनोद्धुरा दण्डा, दण्ड्यते-दुर्गतिपातेन दुःख स्थाप्यते आत्मा अमीभिरिति दण्डा-अकुशलमनोवाक्कायाः त एव देहिनामुत्पथप्रवर्त्तकत्वाच्चपलत्वाच्च 'तुरगा' अश्वाः ततश्च 'वल्गतो'ऽनियमिततया यदृच्छया प्रसरन्तो गौरवचण्डा दण्डतुरगा येषां ते तथा 'पुष्यन्तः' प्रबलीभवन्तः कषा योरगा येषां ते तथा। यतीनां हि श्रामण्यवैफल्योत्पादनात् कषायाः कर्तुं न युज्यन्ते। एव तावत्पञ्चाश्रवनिरमण-पञ्चेन्द्रियनिग्रह-दण्डत्रयविरति-कषायचतुष्टयजयलक्षणमस्य दशविधसयमाभावेन तेषां लोकोत्तरबाह्यत्व प्रदर्श्य इदानीं लोकलोकोत्तरबाह्यत्वमपि दर्शयतीत्याह-'सर्वाहृत्य कृतोऽपि' लोकलोकोत्तरविरुद्धाभक्ष्यसेवनपुष्पफलाद्युपभोगाच मद्याचारकारिणोऽपि नामजैना इति प्राकृत 'कष्ट' महद्दुःखमेवत् 'अधुना' सम्प्रति 'स्थित्वा' आदाय 'सन्मुनिमूर्द्धसु' सुविहितमुनिमस्तकेषु, प्रतिपदमभ्यसूयया सुविहितानाम-सद्दोषारोपेण लाघवोत्पादनमेव हि तेषां तन्मूर्द्धस्वत्वस्थान। 'उद्धवधियो' नास्त्यस्मत्समो जगति सम्प्रति कश्चिदिति दर्पाध्मातबुद्धय 'तुष्यन्ति' सुविहित मन्या अप्येते अस्मा भिर्न्यकृता इत्यासयेन मोदन्ते 'पुष्यन्ति च' साध्वादिपरिवारेण श्राद्धादि पूजया च वर्द्धन्ते। 'च' समुच्चये। अथ कथमेवविधा अपि सन्मुनिमूर्द्धावस्थानेन ते तुष्यन्ति पुष्यन्ति चेत्यत आह—'अन्त्याश्चर्यराज्ञाश्रिता' पाश्चात्याश्चर्यपार्थिवानुगता, 'यत' इति हेतुगर्भ विशेषण। एतदुक्त भवति—न क्षेत्रविपाकत्यविधायिनो महामुनीनां मस्तकेष्वव स्थान कर्तुं पारयन्ति, कथश्चित्कुर्वाणा अपि या न तोष पोष च ते प्राप्नुवन्ति, महामुनि तिरस्कारमात्रेणापि तत्कारिणामिहैव हानि श्रवणात्, पर यदेवमनर्थकारिणोऽपि लिङ्गिनः सुविहितान्तिरस्कृत्यापि नन्दन्ति तन्नून दशमाश्चर्यमहिमाऽयमिति वृत्तार्थ. ॥ २२ ॥

साम्प्रतं तेषां प्रत्यहं सर्वविरतिरूपप्रत्याख्यानभङ्गकरणेन तपश्चरणाद्यभावं प्रतिपादयन्नाह—

सर्वारम्भ-परिग्रहस्य गृहिणोऽप्येकासनाद्येकदा ॥ २३ ॥

व्याख्या—'सर्वारम्भ-परिग्रहस्य' सकलसावद्यव्यापार धनधान्यादिसङ्ग्रह-तत्परस्य 'गृहिणोऽपि' श्राद्धस्यापि, आस्तां महामुनेरित्यपि शब्दार्थः। 'एकाशनं' अन्तर्दिवसमेकवारनियमितभोजनः प्रत्याख्यातभेदः तदादिर्यस्य निर्विकृतिकादेः तदादिप्रत्याख्यानं 'एकदा' कदाचिदष्टम्यादितिथिषु प्रमादबाहुल्येन नित्यप्रत्याख्यानाभावात् 'प्रत्याख्याय' नियम्य, तदपि कदाचितकृतमेकाशनादि ' न रक्षतो 'ऽनाभोगसहसाकारादिना न पालयतो—भञ्जत इत्यर्थः। 'हृदि' चेतसि 'भवेत्'—जायेत 'तीव्रो' निष्ठुरोऽनुतापो—बहुना कालेन तावदद्य प्रत्याख्यानं कृतं तदपि मया मन्दभाग्येन भग्नमतो धिङ्मां, कथं मे शुद्धिर्भविष्यतीत्येवंरूपः पश्चात्तापः 'सदा' सर्वदा यावद्भङ्ग-प्रायश्चित्तं गुरुभ्यो नामादयति। 'षट्कृत्वः' त्रीन् वारान्सायन्तनप्रतिक्रमणे। त्रींश्च प्रगेतनप्रतिक्रमणे षड्वारान् "सङ्ख्याया वारे कृत्वस् तद्धितः" त्रिविधं त्रिविधेति, अनेन सामायिकसूत्रमुपलक्षयति, किल साधवः सायन् प्रातश्च प्रतिक्रमणे सामायिकसूत्रमुच्चारयन्तस्त्रिविधं त्रिविधेनेति पठन्ति, यथा—"[करेमि भंते! सामाइयं सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए, तिविहं तिविहेणं मणेणं वायाए काएण"मित्यादि]। तत्र त्रिविधमिति तिस्रो विधा यस्येति त्रिविधं—कृतकारितानुमतलक्षणं, त्रिविधेति त्रिविधेन करणेन मनोवाक्कायरूपेण सावद्यं योगं प्रत्याख्यामि इत्येवं रूपतया 'अनुदिनं' प्रतिवासरं 'प्रोच्य' अभिधाय—प्रतिज्ञायापीत्यर्थः, अप्रतिज्ञातानुष्ठानस्य हिं भङ्गेनापि न तथा दोष इत्यपि शब्दार्थः। 'भञ्जन्ति' खण्डयन्ति ये लिङ्गमात्रवृत्तयः तेषां। 'तु' गृहिणो भेदप्रदर्शनार्थः, क्व शब्दाः सर्वेऽप्यक्षमाव्यञ्जकाक्षेपार्थाः। 'तपो'ऽनशनादि, नित्यप्रत्याख्यानस्य सर्वसावद्ययोगविरतिरूपस्य सकललोकसमक्षमभ्युपेतस्य भङ्गप्रदर्शनेन नैमित्तिकप्रत्याख्यानस्यापि कथञ्चिल्लोकपङ्क्त्या विहितस्योपवासादेः भङ्गानुमानात्—नास्त्येव तेषां कश्चित्तपः। क्व 'सत्यवचनं' तथ्यवाक् ?, सर्वं सावद्यं योगं न करोमीत्यभिधाय पुनस्तत्क्षणमेव तन्निषेवणात्, प्रत्यक्षमृषावादिताप्रसङ्गेनांशेनापि सत्यवचनाभावात्। क्व 'ज्ञानिता' सिद्धान्तरहस्यपरिच्छेतृत्वं ?, ज्ञानस्य हि फलं विरतिः तस्याश्च सातशीलतया तैः समूलमुन्मूलनात् तथा च कथञ्चित्सतोऽपि ज्ञानस्याकिञ्चित्करत्वेन तदाभासत्वात्, ज्ञानगन्धोऽपि तेषां नास्तीति। क्व 'व्रतं' दीक्षा, दीक्षोपादानेऽपि प्रत्याख्यानभङ्गादलीकभाषणेन दीक्षाया

अपायबधापादनाद् व्रत तेषा नास्ति । अत्र चामकृत्कशब्दोपादानेन लोके लोकोत्तरे च तत्तपःप्रभृते' तपस्त्वादिक न सम्भवतीति ज्ञाप्यते, तेनायमाशयः–यदा किल गृहिणोऽपि सतत गृहारम्भसरम्भवत्त्वात्प्रमादभरनिर्भरा अप्यनवगततत्त्वा अपि कदाचित्प्रत्याख्यानभङ्गेनैवमनुतप्यन्त, तदा सुतरा यतीनां सर्वसावद्ययोगविरतानां विदितागममाराणां कथचिन् विरतिभङ्गे पश्चात्तापः प्रायश्चित्तग्रहश्च युक्त', ये तु निश्शूकतया ता भञ्जन्तो मनाग्लज्जामपि नादधति तेषा नास्त्येव तप.प्रभृतीति वृत्तार्थः ॥ २३ ॥

इदानीं तेषां लोकोपहासपुरस्सर जिनपथपरिपन्थित्व वृत्तद्वयेन प्रकटयन्नाह—

देवार्थव्ययतो यथारुचिकृते सर्वर्तुरम्ये मठे ॥ २४ ॥
इत्याद्युद्धतसोपहासवचस स्युः प्रेक्ष्य लोका स्थितिम् ॥ २५ ॥

व्याख्या—येषां स्थितिं प्रेक्ष्य लोका. सोपहासवचसः स्युरिति सम्बन्धः । कथमित्याह–अहो इति विस्मये, सितपटा'–श्वेताम्बरा 'कष्ट' दुष्कर 'चरन्ति' अनुतिष्ठन्ति 'व्रत' प्रव्रज्यां, महदाश्चर्यमेतत्–यत्–सितपटा कलावप्येवविध व्रतकष्टमनुभवन्ति, नहि सम्प्रतितनैर्मानवैरल्पसत्त्वैरेवविध कष्ट कर्तुं शक्यते, अथ च सर्वैरप्येवरूप व्रत कर्तुं पार्यत एव, सुखहेतुत्वादित्युपहास' । अथ कथमेवमुपहासः तेषा तैः क्रियत ? इत्यत आह–'साधुव्याजेन' यतिछद्मना विटा', नामी साधवः तल्लक्षणायोगात्, किन्तु तद्व्याजेन विटा., सकलतल्लक्षणोपपत्ते' । तदेवाह–'देवार्थव्ययतो' देवगृहाधिपत्ये न तद्द्रविणस्य तदधीनत्वात् जिनवित्तविनियोगेन 'यथारुचि' स्वमनोऽभिलाषानुरूपमित्यर्थ । 'कृते' निष्पादिते 'सर्वर्तुरम्ये' सकलवसन्तादिरूपतया विभक्तकालविशेषमनोहरे मठे प्रतीते, तत्र 'नित्यवस्या ' सततवासिन , सुविहिता हि देवद्रव्योपभोगभयात् यतिनिमित्तनिर्मितत्वेन महासावद्यत्वाच्च मठे न वसन्ति, किन्तु याचिते यादृशि–तादृशि परगृहादावेव, तत्रापि ना[नि]त्यवस्था वसन्ति, नित्यवासस्य च यतीनां श्राद्धादिप्रतिबन्धलाघवादिहेतुत्वेन प्रतिषेधात्, उद्यतविहारस्यैव ममकाराद्युच्छेदनिमित्तत्वेनाभिधानात् । एते तु सातलम्पटतया मठे नित्यवस्तव्यतयो विलसन्तीति कथ न भवन्ति विटा ? । तथा 'शुचयो' निर्मला' 'पट्टतूल्य.' पट्टांशुकसवीता हमरूतादि मया गन्ध्यादिविशेषा , यद्वा ' पट्टा ' श्रीपर्णादि दारुनिर्मिता ताः 'शयन' शयनीय येषां त तथा, साधवो हि कम्बलादिसस्तारक एव शेरते, न पट्टतूल्यादिषु, तासा प्रमार्जनाद्यशुद्धे विभूषासातशीलत्वप्रसङ्गाल्लोकोपहासहेतुत्वाच्च, एते तु तत्र शयाना विटत्व प्रकटयन्ति । तथा 'सद्गन्धिका यानगा' शोभनगन्धिकायासना –शोभनगन्धिकासमुरकादि विष्टरभाजः, गन्धिकायुप

वेशने च दोषा मुनीनां प्रागेवोक्ताः । 'सारम्भाः' मठ-वाटिका-कृष्यादि-महासावद्या-व्यापारकरण-कारण-प्रवणाः 'सपरिग्रहाः' गृहिवत् वाणिज्यादिप्रयोजनेन धनधान्य-स्नेहादिभाण्डसङ्ग्रहपरायणाः 'सविषयाः' चक्षुरादीन्द्रियानुकूल-नर्त्तकीदर्शन-ताम्बूल-स्वादन-चन्दनाद्यङ्गराग-गन्धर्वगीत-श्रवणादिविषय-सततानुषक्तचेतसः 'सेर्ष्या' विषयासक्तत्वात् कामुकत्स्वाभिमतां योषितमन्येन सार्द्धमालापादिविदधानामवेक्ष्य तं प्रत्यक्षमाभाजः 'सकांक्षाः' सम्भोगविलासाभ्यासात्प्रतिक्षणं नवनवोपजायमानरिरंसो-त्कलिकाः । आरम्भादयश्च यतीनां बहुदोषत्वादनेकधा निषिद्धा एव । 'सदा' सर्वदा, विषयाणामनादिभवाभ्यासात्, कदाचित् सन्मुनेरपि कस्यापि चेतोविकारमात्रं प्रादुःष्यात्, न तु सर्वदा, तदैव तेषां ज्ञानाङ्कुशेन स्वचित्तमाकृष्य मिथ्यादुष्कृतादि प्रायश्चित्तप्रति-पत्तेः, इति साधूक्तं-'साधुव्याजविटा' इति ॥ २४ ॥

'इति' उक्तप्रकाराणि, आदिशब्दात् अन्यान्यप्येवं प्रायाणि विडम्बना व्यञ्जकानि वचांसि गृह्यन्ते । ततश्च इत्यादीनि-उद्भतानि-बहुजनवदनस्य मुद्रयितुमशक्यत्वातनि-श्शङ्कतयोद्भटानि, सर्वत्रास्खलितानीति यावत् । 'सोपहासानि' उत्प्रासभाञ्जि 'वचांसि' वचनानि येषां ते तथा स्यु-र्भवेयुर्लोकाः-प्राकृतजनाः कुतीर्थिकभाविताश्च जैनपथमत्सरिणः 'प्रेक्ष्य' साक्षात्कृत्य, येषांमिति पदं तुर्यपादस्थितं सकलं वाक्यं दीपयति, तेन येषां स्थितिमित्यादि सम्बध्यते । 'स्थितिं' यति अनुचितासमञ्जमसामाचारीं, स्वरूपेणैव तावत् मत्सरिणः सर्वस्याप्युपहासं कुर्वन्ति, किम्पुनः सम्प्रति निरतिशयस्य जिनशासनस्य ?, तत्रापि लिङ्गिनां तथारूपं वैशसं व्यवहारं वीक्ष्य कथङ्कारं न कुर्युरित्यर्थः । तथा 'श्रुत्वा' आकर्ण्य येषां स्थितिं 'अन्ये' अपरे 'अभिमुखाः' शेषदर्शनेभ्यः सकलो-पपत्तिकलितमिदं जैनदर्शनं, यतयोऽप्यत्र दर्शने शान्तात्मानः क्रियानिष्ठाश्चोपलभ्यन्ते, ततोऽस्माकमपीदमङ्गीकर्त्तुमुचितमिति चेतसोऽभ्युपगमविषयीकृतजिनशासनास्तेऽपि, आसतां तदपर इत्यपेरर्थः । 'श्रुतपथात' जैनसिद्धान्तमार्गात् वैमुख्यं, एतावन्तमनेहसं वयमेवम् अज्ञास्याम-यदेतदेव तात्त्विकं धर्मदर्शनं निरपवादं, परं यदत्राप्येवं विधा असदा-चारकारिणो विलोक्यन्ते तदाऽलमनेन ताम्र-हिरण्मया-लङ्कारदेशीयेनान्तो निस्सारेण बहिर्मात्रमनोहरेण सर्वथा, प्राक्स्वीकृतमेवास्माकं दर्शनं श्रेयः, अहो जैना अन्यथा-वादिनोऽन्यथाकारिण इत्यादि वचनसन्दर्भेण 'वैमुख्यं' पराङ्मुखत्वं सर्वथा बहि-र्भावमिति यावत 'आतन्वते' दर्शयन्ति । तथा येषां 'मिथ्योक्त्या' मृषावचनेन, ते हि स्खलिताचारत्वेन सर्वशङ्कितत्वात् असमञ्जसचेष्टितं प्रति केनचित्प्रष्टास्सन्तो मलि-म्लुचवदलीकं भाषन्ते, यथा-क एवमाह ?-न वयमेवंविधमेव कारिण इति । ततश्च

'सुदृशोऽपि' सम्यग्दृष्टयो जिनमतान्तःस्था अपि प्रायशः, किम्पुनरन्ये ? इत्यपेरर्थः। 'बिभ्रति' धारयन्ति–कुर्वन्तीति यावत्, मनः–चेतः 'सन्देह' इद किमेवमन्यथा वेत्युभयकोटी उल्लेख्यनवधारणज्ञान संशयः, स एव एकत्रानवस्थितरूपत्वसाधर्म्याद्दोला, तया चल, यथा दोलारूढ वस्तु तस्याश्चलत्वाच्चल, एव सुदृशामपि मनः। अथवा 'सन्देहेन करणभूतेन दोलावच्चल येषा नाम जैनाना ते अमी सर्वत्र सम्प्रति प्रसृतत्वात् पुरोवर्त्तिनः। नन्वित्यक्षमाया। 'सर्वथा' सर्वैः प्रकारैः 'जिनपथप्रत्यर्थिनो' भगवन्मत प्रत्यनीका', न तु केनापि प्रकारेण तदनुकूला अपि जैनदर्शनोद्धास–तदभिमुखवैमुख्या पादनादिना जिनशासनेनुपचयहेतुत्वेन वस्तुतस्तेषां तदुच्छेदकत्वात्। येषा चापराधेन शशधरकरविशदे भगवच्छासने लोकोपहासविपर्यासादयो दोषाः प्रादुःष्यन्ति तेऽनन्त ससारिणः सिद्धान्ते प्रतिपादिताः, महापापीयस्त्वात्। 'तत' इत्येतत्पदमग्रिमवृत्तौ सम्भस्यत इति वृत्तद्वयार्थः ॥ २५ ॥

साम्प्रत कुपथवर्त्तिना विधिपथ प्रत्यैकान्तिकीमात्यन्तिकीं च निरुपमां च मनसो दुष्टतामुपलभ्य तदुत्पाद च इतरजनमनःकारणसामग्र्या असम्भावयँ. तद्विलक्षणा तदुत्पाद सामग्री सम्भावनाद्वारेणाह—

सर्वैरुत्कटकालकूटपटलः सर्वैरपुण्योच्चयै ॥ २६ ॥

व्याख्या—'तत' शब्दस्य प्राक्तनवृत्तस्थस्येह सम्बन्धात्तेन, यतोऽमी सर्वथा सत्पथ दुष्टचेतसः तत. तस्माद्धेतो', किमित्याह–नूनमिति सम्भावनाया, अहमेव सम्भावयामि–यावन्त्यतिदुष्टवस्तूनि जगति सन्ति तावद्भिर्दुर्मार्गमासेदुषां क्रूर मानसमकारीति सम्बन्ध., कथमन्यथा तन्मनसोऽतीव क्रूरता ? इतरजनमनःसाधारणकारणसामग्रीतः तदनुपपत्तेः, कारणानुरूपत्वात्कार्यस्य, न च हि न्यग्रोधबीजात्पिचुमन्दप्ररोह। कैस्तैरित्याह–'सर्वैः' सकलैरुत्कटकालकूटपटलै–नूतनत्वादत्युग्रमग्घोघातिविषभेदसमूहै., एकद्वित्र्यादिभिरनुत्कटैश्च कालकूटशकलैस्तत्पटलैर्वा तादृक् क्रूरमनसो जनयितुमशक्यत्वादेवमुक्त। एवमुत्तरपदेष्वपि योज्य। सकलकालकूटपटलैरेव केवलै प्रकृतमनसः कर्त्तुमशक्यत्वात्–अपुण्योच्चयैरित्यादि वाक्यावतारः, ततश्च सर्वै.–अखिलैरपुण्योच्चयै. पाप राशिभि, सर्वव्यालकुले –अशेषाशीविषसन्दोहै 'समस्तविधुराधिष्ण्याविदुष्टग्रहै' कृत्स्नव्य सनचेतः पीडा–गद–मङ्गलादि पापग्रहैरेभिरखिलैर्दुष्टैरेकसामग्रीभावेन सम्भूय 'क्रूर' सन्मार्गघातुक 'मानस' चेत. 'अकारि निर्ममे। क्रूररूपस्य मनसो निर्माण विधेयमत्र, एतेनास्य मनस इतरमनोभि साजात्यमपि निरस्तमित्येतदपि सम्भावयामि इतरमनो-

विलक्षणसामग्रीजन्यत्वेन वैजात्योपपत्तेः, न हि मृत्पिण्डदण्डादि–तन्तुवेमादिविसदृश-सामग्रीजन्ययोर्घटपटयोः साजात्यं नाम, तथा च तन्मनसः कदाचिदपि न शुभभावतापत्तिः, न हि भूनिम्बस्य–शर्कराभावः शिल्पिशतेनाप्यापादयितुं शक्यते, तत्कस्य हेतोः ? स्वस्वसामग्र्या विजातीयतयैव तयोरुत्पत्तेरिति । अथवा मनः सिद्धमेव तस्य तु क्रूरत्वं विधेयं,तस्य कालकूटादिभिः साध्यं। अथास्मिन्पक्षे क्रूरत्वस्यौपाधिकत्वात् अपगमप्रसङ्गो, वस्त्रादिषु महारजनरागस्य तथा दर्शनादिति चेन्न, औपाधिकस्यापि धर्मस्य कयाचित् सामग्र्या जन्यमानस्यानगमदर्शनात्, यथा पट्टांशुकादिषु नीलीरागस्यौपाधिकस्यापि न कदाचिदपगम इति । तदुपपन्नमेतन्नूनं क्रूरमकारि मानसमिति । ‘ अमुं ’ प्रत्यक्षं ‘ दुर्मार्गं ’ कुपथं ‘ आसेदुषां ’ अभ्युपेयुषां लिङ्गिनां तद्भक्तानां चेति शेषः । ननु भवतु तेषां क्रूरं मनस्तथापि किं न वच्छिन्नमित्यत आह–‘ दौरात्म्येन ’ दुष्टाशयत्वेन ‘निजघ्नुषां ’ उच्चिच्छिदुषां ‘ जिनपथं ’ भगवत्प्रणीतं सत्पथं सन्मार्गवर्त्तिनामुपसर्गकरणेन वस्तुतो जिनमार्गं भ्रंशयद्भिर्बह्वस्माकं छिन्नमित्यर्थं । अथ जिनपथं नि [ ज ] घ्नतां तेषां द्विजादीनामिव किं दर्शनान्तरपरिग्रहेण मतान्तर प्ररूपणा नेत्याह–‘ वाचा ’ वचनेन स्वमति कल्पितमप्यौद्देशिक भोजनादिमार्गं ‘ एषसः ’ अयमेव स जिनप्रणीतः पन्था नान्य ‘ इति ’ एवं प्रकारेण ‘ उचुषां ’ अभिदधुषां, न ते दर्शनान्तरस्थाः स्वमतं परूपयन्ति, तत्स्थैर्जिनपथवर्त्तिनो जनस्य प्रतारयितुमशक्यत्वात्, किन्तु अस्मिन्नेव दर्शने वेषमात्रेण स्थिताः स्वप्ररूपितं कुमार्गं जैनमार्गतया वदन्तो मुग्धलोकं व्यामोहयन्तीत्यर्थः, एतावता संरम्भेण सत्पथं प्रत्यतीव प्रत्यनीकत्वं तेषां प्रकटितं । इह च सेत्यत्र ‘ स ’ शब्दाद्विर्जनीयलोपे सन्धिप्रतिषेधेऽपि “ ते तदा पादपूरतो सन्धि ” रिति विशेषलक्षणेन सन्धिविधानमिति वृत्तार्थः ॥ २६ ॥

‘ अत इत्य ’ न्तरा पदद्वयोरप्यनयोर्वृत्तद्वयोः सम्बन्धयोजनार्थं, तच्चाग्रिमवृत्तस्यादौ योक्ष्यते, इदानीं तेषां वचनमात्रमपि विवेकिनः श्रोतुं न युज्जत इत्याह—अतः–

दुर्भेदस्फुरदुग्रकुग्रहतमः स्तोमास्तधी चक्षुषां ॥ २७ ॥

व्याख्या—यत एवं नामैते जैनपथं प्रति दुष्टा, अतो–ऽस्माद्धेतोः, किमित्याह तेषां ‘ वचांसि ’कुपथप्रतिपादकानि वचनानि ‘ कुरुते ’ विधत्ते कर्णौ स्वश्रवणे ‘सकर्णः’ सश्रोत्रः । अथ च सहृदयः ‘ कथं ’ केन प्रकारेण ? न कथञ्चिदित्यर्थः । नहि सकर्णस्य कर्णकटूनि स्पृष्टपरमर्माणि वचनानि खलानां श्रोतुं युक्तानि, किन्तु कर्णयोरेतदेव फलं-यत्पीयूषवार्षुका अपहसितमुक्ताः सतां सूक्तयः श्रूयन्ते । अथ च सकर्णस्य प्रेक्षावतः

कुपथवर्त्तिनां भावितानि कर्णे कर्तुं न युज्यन्ते, तच्छ्रवणस्य साधूनामपि मिथ्यात्वनिबन्धत्वेनाभिधानात् । कीदृशामित्याह–'दुर्भेदो' निबिडत्वात्–दुरुच्छेदः 'स्फुरत् मनसि सततावस्थिततया जागरूक 'उग्रो' दृढः 'कुग्रहः चैत्यग्रामादि प्रतिष्ठापनविषयो मिथ्याऽभिनिवेशः स एव 'तम स्तोम' सत्पथदर्शनान्तर्धायकत्वादन्धतमसः पटल, तेन 'अस्त' छन्न 'धीः' प्रेक्षा, सैव सत्पथप्रकाशकत्वात् चक्षुर्लोचन येषां ते तथा, तेषा, यथा तम स्तोमेन तिरोहितचक्षु. पन्थान न पश्यति तथा तेषामपि धी. कुग्रहेण तिरस्कृतत्वात् न सन्मार्गं मृगयते । तथा 'सिद्धान्तद्विषता' तद्विपर्यस्ता–र्थप्ररूपणया तदुच्छेद प्रवृत्तत्वादागमवैरिणा, निरन्तरमहामोहाद्–व्यसनातिरेकानिरन्तरात् । अहमिति निपातोऽस्मदर्थः ततश्च वयमेव श्रेष्ठा', नास्मत्सम' कश्चिदित्यात्मान मन्यन्ते ये ते अहम्मानिनस्तेषा, विवेकिना हि गम्भीरत्वेन महति गुणगणे सत्यप्यनुत्सेकात्, मूढाना तु तुच्छतया स्तोकेऽपि तस्मिन्–जगतोऽपि तृणतया मननात्, तथा 'स्वय' आत्मना 'नष्टा' सुखलोलतयाऽनवरतम्–अन्याय्ये पथि प्रवर्त्तमाना जनपुरत. सस्थापयितुमशक्नुवन्त' 'क धर्म' ? क सम्प्रति व्रतिन 'इत्यादि नास्तिक्य प्रतिपन्ना' तेषा, 'अन्येषा' आत्मव्यतिरिक्ताना 'नाशनकृते' नास्तिकतावादापादननिमित्त 'यद्बोधमानां' यदि हि एतानप्यात्मना कथञ्चित्समी कुर्मस्तदा सुन्दर भवत्यन्यथैते धार्मिकमन्याः परुषराग्मिरस्मान् मन्तक्षिप्यन्तीत्याशयेन तन्नाशनाय निहितप्रयत्नाना 'सदा' सर्वदा 'मिथ्याचारा' मुक्तिपथविपरीता' समाचारा मिथ्यात्वा–विरति–प्रमाद–कषाय–दुष्टयोगलक्षणा, अथवा लोकप्रलम्भनहेतु–कषायेन्द्रियसयमपुरस्सर विषयप्रणिहितमनस्करन, यदाह "बाह्येन्द्रियाणि सयम्य, य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा, मिथ्याचार' स उच्यते ॥ १ ॥" ततश्च 'तद्वतां' तद्युक्ताना, अत' तद्भावितानि सुविहितैः सुश्रावकैश्च न श्रोतव्यानीति तात्पर्यमिति वृत्तार्थ. ॥ २७ ॥

अधुना नियतादिरूप धर्मदेशिनामपि तेषां कुपथस्य तथाविध–मुग्धजनोपादेयतां सविषाद प्रतिपादयन्नाह—

यत् किञ्चित् वितथ यदप्यनुचित यहो–क लोकोत्तरो ॥ २८ ॥

व्याख्या—यत्तदिति वीप्सया सर्वसङ्ग्रहमाह–धर्मसाधनमनुष्ठानमिह धर्म ततय 'धर्म इति' सुकृतमिदमित्येवरूपतया 'ब्रुवन्ति' वदन्ति 'कुधियो' दुर्मेधसो नाम जैना. । यत्किमपि याह–यत्किञ्चिदिति, सामान्यतो निर्दिष्ट विशेषतोऽनिर्दिष्टनामक

'वितथं' अलीकं श्रेणिकराजरजोहरणवन्दनादि, न ह्येतदागमे क्वचिल्लिखितमस्ति, येन सत्यं स्यात्, परं लिङ्गिनः स्ववन्द्यतापादनाय तदपि धर्म इति भाषन्ते, यदाह—"श्रीश्रेणिकः क्षितिपतिः किल सारमेय–लाङ्गूलमूलनिहितं यतिवद्वन्दे। भक्त्या रजोहरणमित्यनृतं वदन्ति, ही!!! लिङ्गिनो नृपतया कुधियः प्रलब्धुम्॥ १॥" तथा यदपि, अपिः समुच्चये। यच्चानुचित–मयोग्यं पित्राद्युद्देशेन यात्राकरणादि निमित्तं हि धर्मनिमित्तं हि कृत्यजातं जिनमन्दिरे कर्त्तुमुचितं, नान्यत्। पित्राद्युद्देशेन तु यात्रादि तत्र विधीयमानं गुणवहुगानविकलकेवलस्नेहनिबन्धनत्वान्न धर्मः, परं तदपि लिङ्गिनो धर्मोऽयमित्यभिधाय स्वोपयोगाय विधापयन्ति। तथा यल्लोको–जैनमार्गबहिर्भूतः शिष्टजनः 'लोकोत्तरो' जिनप्रवचनं, ताभ्यामुत्तीर्णं–बाह्यं सूतकभिक्षाग्रहणादि, एतत् हि लोकलोकोत्तरयोर्विरुद्धत्वात् न धर्मस्ते तु गार्द्ध्यादिहेतुनैतदपि धर्म इत्यभिदधति, यदाह—"भिक्षासूतकमन्दिरे भगवतां पूजा मलिन्या स्त्रिया, हीनानां परमेष्ठि संस्तवविधिर्यच्छिक्षणं दीक्षणम्। जैनेन्द्रप्रतिमाविधापनमहो तल्लोकलोकोत्तर–व्यावृत्तेरथ–हेतुमप्यधिपणाः श्रेयस्तया चक्षते॥ १॥" तथा यद्भवहेतुरेव–संसारकारणमेव 'भविनां' देहिनां जिनमन्दिरे जलक्रीडादि। एतद्धि मदनोद्दीपनत्वात् क्रीडामात्रत्वेनातात्त्विकत्वाच्च संसारवर्द्धनमेव, परमेतदपि लिङ्गिनो धर्मच्छद्मना स्वावलोकनकुतूहलेन कारयन्ति। तथा यत् 'शास्त्रबाधाकरं' सिद्धान्तविरोधाधायकम् औद्देशिकभोजनादि, यथा चौद्देशिकादीनां शास्त्रबाधितत्वं तथा प्राग्नेवोपपादितं, अथवा आषाढचतुर्मासकात् पञ्चाशत्तमदिनप्रतिपादितस्य पर्युषणापर्वणः श्रावणाद्याधिक्यवति वर्षेऽशीतितमेऽह्नि विधानं। ननु ब्रुवन्तु ते स्वमति कल्पितं मार्गं, तथा वितथादिस्वभावत्वात्तं न कोऽपि ग्रहीष्यति, तथा चोक्तोऽप्यनुक्तकल्पो लोकोपादानाभावेन प्रसराभावादित्यत आह—'मूढा' अज्ञानिनः तद्धर्मव्याजेन लिङ्गिप्ररूपितं मतं अर्हन्मतभ्रान्त्या जिनमार्गोऽयमिति मिथ्याज्ञाने 'लान्ति' उपपादते। अयमर्थः यथोभयगतचाकचिक्यादि सदृशधर्मोपलम्भात् परस्परव्यावर्त्तकदेशजात्यादि-भेद धर्मानुपलम्भाच्च अरजनेऽपि शुक्तिकायां रजतमेतदिति धिया भ्रान्ताः प्रवर्त्तन्ते, अथेहापि सन्मार्गासन्मार्गगतजिनदेवताऽभ्युपगमबाह्यवेषादि समानधर्मावगमादन्योन्यव्यवच्छेदकविध्यविधिप्रवृत्त्यादि विशेषधर्मानवगमाच्च वितथत्वादिना वस्तुतोऽनर्हन्मतेऽपि प्रकृतमार्गेऽर्हन्मतमेतदिति बुद्ध्या मूढाः प्रवर्त्तन्त इति, न केवलमेते कुमार्गं वदन्ति मूढास्तु तं गृह्णन्त्यपीति च शब्दार्थः। हा इति खेदे 'दुरन्तदशमाश्चर्यस्य' दुःखावसानान्त्यश्चार्यस्य 'विस्फूर्जितं' विजृम्भितमेतदिति, कथमन्यथा कुपथस्याप्येतस्य बहुमुग्धजनोपादेयता स्यादतः कष्टमेतत् यद् अद्यापि अयं कुमार्गोऽस्खलितप्रसरोऽनुवर्त्तत इति वृत्तार्थः॥ २८॥

साम्प्रतं मुग्धजनान् प्रति स्वमतं मोक्षपथतया दिशत' सत्पथगामिनश्च धार्मिकान् स्ववचनाऽननुरोधित्वेनाज्ञतया अवजानानस्य कस्यचिद्यथा छन्दाचार्यग्रामण्योऽप्रस्तुतप्रशंसया स्वरूपमाह—

कष्टं नष्टदृशां नृणां यददृशां जात्यन्धवैदेशिकः ॥ १९ ॥

व्याख्या—'कष्ट' दुःखमेतत् नः चेतसि वर्त्तते, यत् किमित्याह, यदिति वाक्योपक्षेपे, यन्नृणामदृशां जात्यन्धवैदेशिकः कान्तारेऽभीप्सितपुराध्वानं प्रदिशतीति सम्बन्धः। तत्र 'नृणां' पुंसां 'नष्टदृशां' अलोचनत्वात्कान्तारपातेन दिङ्मूढत्वाच्च प्रनष्टप्राचीप्रतीच्यादिककुप्विभागपरिच्छिदानां 'अदृशां' काचकामलादिना दृग्विकलानां, न तु जन्मान्धानां, जन्मान्धो—जन्मभिव्याप्य लोचनरहित'। न तु सोऽपि तद्देशजात इतरेभ्यः श्रवणादिना विज्ञाय कथञ्चिदिष्टपुरपथं देष्टयतीति तत्रोक्तं 'वैदेशिक' इति। विदेशे—योजनव्यवहिते देशान्तरे जातो वर्द्धितश्चेति वैदेशिकः। सहि तद्देशस्वरूपमात्रस्याप्य नभिज्ञत्वात्कथं प्रकृतमार्गं जानीयादपि, ततः कर्मधारयः। 'कान्तारे' जनसञ्चार शून्ये दुर्गवर्त्मनि 'प्रदिशति' प्रतिपादयति। 'अभीप्सितपुराध्वानं' जिगमिषितः नगरमार्गं, किलेति वार्त्तायां। 'उत्कन्धर' उद्ग्रीवः कथमुन्नमय्य भुजदण्डमुत्क्षिप्य कथयतीति कष्टमेतत्। तुः पुनरर्थे। 'इदं' वक्ष्यमाणं पुनः 'कष्टतरं' पूर्वस्मादपि कष्टान्महत्कष्टं। यत् किमित्याह-'सोऽपि' प्रागुक्तो मार्गदेष्टा 'सुदृशो' निर्मललनयनानत एव 'सन्मार्गगान्' इष्टनगरसुगमपथप्रस्थितान् 'तद्विदः' सम्यक् सन्मार्गज्ञान् यत् हसति, सावज्ञमिति क्रियाविशेषणं—सावहेलं 'अज्ञानिव' मार्गानभिज्ञानिव। यथा मार्गानभिज्ञा मार्गमुपदिशन्त उपहस्यन्ते लोकेन, तथैतेऽपि तेन। एवं प्रस्तुतमुपमानं योजयित्वा प्रस्तुतमुपमेयमिदानीं योज्यते—कष्टमेतत् यन्नृणां—सत्पथेच्छुपुरुषाणां 'नष्टदृशां' अतिमुग्धतया सत्पथकुपथविभागानभिज्ञानात् अदृशां—सम्यग्ज्ञानदर्शनविकलानां 'जात्यन्धः' सिद्धान्तरहस्यलेशानभिज्ञ सर्वथा अगीतार्थः। सोऽपि गीतार्थसंगमादेः कथञ्चित् मोक्षपथकथनप्रवीण स्यात्—तत्राह-'वैदेशिको' गर्हिताचारत्वाद् गीतार्थमुनिपुङ्गवसङ्गमात्रवर्जितः। एष चाधुनिकदुःसङ्घप्रवरो निश्शङ्कं निःश्रेयसपथप्रत्यर्थिमार्ग कथनदीक्षितो यथाछन्दशिरोमणिः कश्चिदाचार्यो मन्तव्य.। 'कान्तारे' भवमहाटव्यां 'प्रदिशति' अभीप्सितपुराध्वान—मुक्तिमार्गं 'उत्कन्धरो' दर्शिताहङ्कारविकारं। तथा च सोऽगीतार्थं उत्सूत्रभाषको मिथ्यादृष्टिः कथञ्चिदपि 'सत्पथं' मोक्षमार्गं न वेत्ति, नाप्यन्येन गीतार्थेन प्रतिपादितोऽपि प्रत्येति, इति कष्ट,

एतत्कष्टतरं 'तु' इति पूर्ववत् । सोऽपि प्रागविहितो यथाछन्दाचार्यः 'सुदृशः' सम्यग्ज्ञानदर्शनयुजः 'सन्मार्गगान्' ज्ञानदर्शनचारित्रलक्षणमुक्तिपथप्रवृत्तान् 'तद्विदो' मुक्तिमार्गाभिज्ञान धार्मिकान् सुविहितसाधून् यद्धसति सावज्ञमज्ञानित्र, यथा-किममी अगीतार्था मूर्खशिरोमणयः सिद्धान्तरहस्यं जानन्ति ?, अहमेव सकलश्रुतपारावारपारदृश्वा, ततो यमहं ब्रवीमि स मुक्तिमार्ग इति । किमित्येवमुपहसतीत्यत आह-तन्महाकष्टमित्युपमानोपमेययोस्तुल्यतया योजना । अत्र च मुग्धजनपुरतो निरङ्कुशं स्वकल्पितं चैत्यवासादिकमुत्सूत्रपथं प्रथयन् विधिविषयपारतन्त्र्यप्ररूपणनिपुणान् सुगुरुसम्प्रदायवर्त्तिनः सुविहितानऽसूययोपहसन् सम्प्रति वर्त्तमानः कुसङ्घाचार्यवर्गोऽनया भङ्ग्या कविना प्रतिपादित इति वृत्तार्थः ॥ २९ ॥

साम्प्रतं श्रुत-पथा-वज्ञा-द्वारमुपसञ्जिहीर्षुः शुद्धजिनमार्गस्य दुष्टोपचितसमुदित कारणकलापेन सम्प्रति दुर्लभत्वं प्रतिपादयन्नाह—

सैषा हुण्डावसर्पिण्यनुसमयह्रसद्भव्यभावानुभावा, ॥ ३० ॥

व्याख्या—या आगम-ग्रन्थेष्वागामितया लिखिताऽऽकर्ण्यते, सा एषा सम्प्रति प्रत्यक्षा, कालस्याप्रत्यक्षत्वेऽपि तदुद्भवकार्याणां प्रत्यक्षेणोपलम्भेनोपचारादेषेत्युक्तं । 'अवसर्पन्ति' प्रतिक्षणमायुः शरीरप्रमाणादयो भावा हानिं गच्छन्ति प्राणिनामस्यामित्यवसर्पिणी सिद्धान्तप्रसिद्धः कालविशेषः, हुण्डं--सकलाङ्गोपाङ्गानां यथोक्तमानवैकल्यहेतुः षष्ठं संस्थानं, तेनोपलक्षिताऽवसर्पिणी हुण्डावसर्पिणी, व्युत्पत्तिमात्रं चेदं, तत्त्वतस्त्वनन्ततम-कालभाव्यसंयतपूजानिबन्धनं चैत्यवास्युत्पादहेतुः शुभभावहानिकारणं कालभेदो हुण्डावर्पिणी, सा च भगवति मोक्षं-गते जातेति । 'समयः-परमसूक्ष्मः कालः, ततश्चानुसमयं-प्रतिक्षणं 'भव्यानां' मुक्तिगामिनां, अथवा 'भव्याः' शुभा 'भावाः' परिणामा 'अनुभावाश्च' प्रभावा मति-निश्चया वा, ततश्च 'ह्रसन्तो' हीयमाना भव्यभावानुभावा यस्यां सा तथा । हुण्डावसर्पिण्यां हि कालस्वाभाव्यात् धर्मार्थिनामपि प्रायेण भावा यादृशा वर्त्तमान क्षणे न तादृशाः क्षणान्तरे इत्यादि क्रमेण प्रतिक्षणं सङ्क्लेशतारतम्याध्राततयोपजायमाना उपलभ्यन्ते, तथा च प्रकरणकारेणैव प्रकरणान्तरे प्रदर्शितं-" कालस्स अइकिलिट्ठत्तणेण अइसेसिपुरिस-विरहेण । पायमजुग्गत्तेण य, गुरुकम्मत्तेण य जियाण ॥ १ ॥ किर मुणियजिणमयावि हु, अंगीकयसरिसधम्ममग्गावि । पायमइसंकिलिट्ठा, धमन्थी वित्थ दीसंति ॥२॥" अत्र च ह्रसदित्यनेन संयोगपरत्वेऽपि पूर्ववर्णस्य न गुरुत्वं, छन्दः शास्त्रैर्व्यवस्थित[क्या]नुवृत्त्या क्वचित्तन्निषेधात् ।

तथा 'त्रिंश' जैनसिद्धान्तोक्ताष्टाशीतिग्रह-मध्यात्रिंशतः पूरणः, च' समुच्चये, उग्रग्रहो-जिनप्रवचनस्योदग्रोपसर्गकारित्वात्-दारुणो ग्रह', अय-मेष प्रत्यक्षोपलभ्यमानकार्यो भस्मराशिनामा, खं-अकाश, तस्य च शून्यत्वात्खमिति भणितव्यवहारे शून्यस्य-बिन्दोः सना, नखा इति च विंशते सज्ञा, नखाना विंशतिसङ्ख्यत्वात्, ततश्च ख च ख च नखाश्चेति द्वन्द्व., तैः पश्चानुपूर्व्या अङ्करचया स्थापितैः मितानि-परिमङ्ख्यातानि 'वर्षाणि' सवत्सरा. 'स्थिति' रेकस्मिन् राशाव[व]स्थान यस्य स तथा, एकराशौ वर्ष-सहस्रद्वयस्थितिक इत्यर्थ.(२०००)। सहि ग्रहो भगवन्निर्वाणकालानन्तर वर्षसहस्रद्वय यावत् क्रूरत्वात्-भगवज्जन्मराशौ सङ्क्रान्तत्वात्-भगवन्त च मुक्तत्वेन दुःखीकर्तुमशक्तत्वात्-तत्पक्षतयैव प्रवचनस्य बाधा करिष्यति। तथा 'अन्त्य' दशम, च' समुच्चये। 'आश्चर्य' अनन्ततम-कालभावित्वादद्भुतम-सयतपूजाख्य 'एतत्' इदानीं प्रत्यक्ष 'जिनमतहतये' आर्हतप्रवचनापभ्राजनापादनाय 'तत्समा' ' वै प्रागुक्तैस्त्रिभि. 'समा' तुल्यबला 'दुष्षमा' दुष्टा-लोकदुःखकारिण्य 'समा' वर्षाणि यस्या सा तथा, कालचक्रस्य षडरस्य पञ्चमोऽरक, यथा प्राक्तनास्त्रय. मसुदिता जिनमत घ्नन्ति तथा चतुर्थी दुष्षमाऽपि। च' पूर्ववत्। इति प्रकरणे। 'एषु' प्रकृतेषु हुण्डावसर्पिण्यादिषु 'एव' दर्शितप्रकारेण प्रतिपद सुविहितलाघवासयतगौरवापादनलक्षणदुष्टकार्यदर्शनाद्दुष्टेष्विव 'दुष्टेषु' क्रूरेषु 'पुष्टेषु' प्रकर्षकोटिं प्राप्तेषु हुण्डावसर्पिण्यादिषु चतुर्षु 'अनुकल' प्रतिसमय 'अधुना' साम्प्रत 'दुर्लभो' दुरापो जैनमार्ग', प्रतिपत्तिविघ्नकारिणां हुण्डा-वसर्पिण्यादीना दुष्टत्वात्तन्महिम्ना च भूयोलोकस्य भवाभिनन्दित्वात्कतिपयमात्रिक जनोपादेय इति यावत् 'जैनमार्ग ' प्रतिश्रोतोरूप-भगवत्पथ इति वृत्तार्थः ॥ ३० ॥

एव तावदष्टादशभिर्वृत्तै प्रबन्धेन लिङ्गिनां श्रुतपथावज्ञा प्रतिपादिता, सम्प्रति तैरेव धर्मतया प्रतिपादित सुविद्वेषधीरिति द्वार निराकुर्वंस्तेषा सुविद्वेष दर्शयन्नाह—

सम्यग् मार्गेषुष मज्ञा वपुष मीलोऽसयक्षुष ॥ ३१ ॥

व्याख्या—खला. सन्मार्गन् न क्षाम्यन्तीति मन्मन्थ। तत्र 'खला.' सुनिः मत्सरिण प्रकरणाल्लिङ्गिनः। कृतद्वेष इति दुषधातु' क्विबन्तोऽत्र दोषपर्यायः। ततश्च 'कृता' विहिता 'दुषो' दोषा -स्वपमनेकेऽनर्था यैस्ते तथा, तत्स्वभावत्वात् तेषा अथवा 'कृता' आरोपिता 'दुषो' दोषा यस्ते तथा, निर्मलेष्वपि सन्मुनिगुणेषु लोकमध्ये लाघवापादनाय स्वधिया विहितदोषारोपा इत्यर्थ.। गुणवत्स्व महोपारो पणस्य तेषां कृत्यत्व वाच। 'उद्यत् दुषः निर्निमित्त सुविहितदर्शनमात्रेणैव प्रकटित

ललाटतटभ्रकुट्यादि क्रोधविकाराः 'न क्षाम्यन्ति' न सहन्ते, द्विषन्तीत्यर्थः। तत्र देशेऽमीषां प्रचारेण वयं लोकस्यागौरव्या भविष्याम इत्यादि बुद्ध्या मात्सर्यात्तत्रावस्थातुमेव तेषां न ददतीत्यर्थः। सुविहित यतीन् सत्साधुत्वमेवानुगुणविशेषणैस्तेषां भावयति— 'सम्यङ्मार्गपुषः' भगवत्प्रणीतज्ञानादित्रयरूपमोक्षपथस्य भव्यानां शुद्धोपदेशप्रतिबोधद्वारेण विस्तारकाः। एतेन तेषामुत्सूत्रभाषणप्रतिषेधमाह। 'प्रशान्तवपुषः' बहिर्लक्षितरागादि विकारशरीरभाजः, एतेनान्तरपि प्रबलरागाद्यभावं प्रकाशयति, अन्तस्तद्भावे बहिः सर्वदा प्रशान्तत्वानुपपत्तेः। 'प्रीतोल्लसच्चक्षुषः' द्विष्टानपि प्रतीत्य प्रसन्नोत्फुल्ललोचनाः, एतेन बहिः कोपविकारपरिहारमाविष्करोति। 'श्रामण्यर्द्धि' प्राणातिपातविरमणादिपञ्चमहाव्रतविभूतिमुपेयुषः—आसेदुषः, एतेन दीक्षामूलं सर्वविरतिसम्पदं दर्शयति। 'स्मयमुषः' अहङ्कारतिरस्कारिणः, एतेन वाग्मित्वविद्वत्तादावभिमानहेतौ सत्यपि तदभावं प्रकटयति। 'कन्दर्पकक्षप्लुषः' मन्मथशुष्कतृणदाहिनः, एतेन सर्वव्रतमध्ये निरपवादब्रह्मव्रतदार्ढ्यं द्रढयति। 'सिद्धान्ताध्वनि' शुद्धागममार्गे 'तस्थुषः' स्थितवतस्तत्परानित्यर्थः, एतेन स्वयमुत्सूत्रक्रियानिषेधं प्रतिपादयति। 'शमजुषः' क्षमाभाजः, एतेनान्तरपि क्रोधनिरासं ज्ञापयति। 'सत्पूज्यतां' विवेकीजनसेव्यतां 'जग्मुषः' प्राप्नुषः, एतेन सकलश्रमणगुणगणसम्पत्तिमाविर्भावयति, निर्गुणानां विवेकिलोकपूजनासम्भवात्। 'विदुषः' विचक्षणान्, एतेन स्वसमयपरसमयसार विदुरतां विस्फारयन्ति। न चैवं गुणशालिषु यतिषु द्वेषः कर्त्तुं युक्तः, अणीयसोऽपि तद्द्वेषस्य सकलगुणिगतगुणद्वेषरूपत्वेनानन्तभवभ्रमणनिबन्धनत्वात्, सिद्धान्तेऽप्यभिहितं "भरहेरवयविदेहे, पन्नरस वि कम्मभूमिया साहू। एकम्मि हीलियम्मी, सव्वे ते हीलिया हुंति॥ १॥ संतगुणछायणा खलु, परपरिवाओ य होइ अलियं च। धम्मे य अवमाणो, साहूपओसे य संसारो॥ २॥" ततः प्रेक्षावता गुणिषु बहुमान एव कर्त्तव्यो, न द्वेष, इति वृत्तार्थः॥ ३१॥

अथ कथमेवं विधानपि सत्साधून् खला न क्षाम्यन्ति? मिथ्यात्वप्राबल्यादिति ब्रूमः, अत एव तद्वतो मूढजनस्य नामजैनपथवर्त्तिनः स्वरूपं निरूपयन्नाह—

देवीयत्युरुदोषिणः क्षतमहादोषा न देवीयति॥ ३२॥

व्याख्या—अहो! मिथ्यात्वग्रहिलो जन उरुदोषिणो देवीयतीत्यादि सम्बन्धः। 'अहो' इति विस्मये, ग्रहः चेतसोऽसत् निर्बन्धः, सोऽस्यास्तीति, अस्त्यर्थे इलू प्रत्ययः तद्धितः। इह मिथ्यात्वं प्रकरणादाभिनिवेशिकं गृह्यते, प्रायेण जैनमिथ्यादृष्टीनां "गोट्ठामाहिल-

माहणे" त्यादिनाऽऽभिनिवेशिकस्यैव तस्य प्रतिपादनात्। ततश्च तेन 'ग्रहिलः' प्रबलमिथ्याऽभिनिवेशगृहगृहीत इत्यर्थः। 'जनो' धर्मध्वजि-भक्तश्राद्धलोकः, उरवो-महान्तो यतिजनस्यात्यर्थमनुचितत्वेन 'दोषा' अपराधा रागद्वेषप्राणातिपातादय उरुदोषाः तद्वत आचार्यादीनिति गम्य। 'देवीयति' देवानिव-जिनानिवाचरति, यादृशा देवा नीरागा अतिशयादि मन्तश्च तादृशा अमी, तस्मादाराध्या इति देवै• तानु-पमिमीते, न च तादृशां तेषा तदुपमान समीचीन, तेषां महादोषवत्त्वेन देवोपमान-विधानस्य महापातक हेतुत्वात् पर मिथ्यात्वस्य विपर्यासरूपत्वात् विपरीतबुद्धिः तादृशा नपि तथोपमिनोति, एवमुत्तरपदेष्वपि भावनीय। 'क्षतमहादोषान्' प्रणष्टप्रागुक्तबृहद-पराधान् युगप्रधानादीनिति शेष। 'अदेवीयति' अदेवानिवाचरति, नामी देव-सदृशाः, सदोषत्वात्-निरतिशयत्वाच्च, तस्मादनाराध्या इति। अत्र च क्षीणप्रायदोषाणा देवैरुपमान सिद्धान्तेऽप्युदित-" पडिरूवो तेयस्सी " इत्यादावाचार्यगुणवक्तव्यतायां 'प्रतिरूपः' सिद्धान्त तात्पर्यपरिच्छेददेशनाऽतिशयवत्त्वादिना तद्विषयबुद्धिजनकत्वात्तीर्थ-करप्रतिबिम्बरूप इति व्याख्यानात्, स च विपर्यस्त-मतित्वात्तथा न करोति। एवमदेव प्राये देवबुद्धिर्देवप्राये चादेवबुद्धिरिति मिथ्यात्वस्वरूप प्रतिपाद्य-गुरौ गुरुबुद्ध्यादिरूप तदाह-' सर्वज्ञीयति ' सर्वज्ञमिव-सर्वविदमिवाचरति ' मूर्खमुख्यनिवह ' अज्ञचूडामणि समूह स्वाभ्युपेतगच्छस्थित यतिजन, यथा-सर्वज्ञसदृशोऽय मदीयो यतिजनः किं किं शास्त्रजात न वेत्तीति। 'तत्त्वज्ञ' षड्दर्शनतर्ककर्कशधिय स्वपरसमयनिर्णयभूमि सूरि-विशेष 'अज्ञीयति' अज्ञमिव-बालिशमिवाचरति, यथा-न किञ्चिदप्येष जानाति। अयमर्थः-न हि मूर्खशिरोमणे सर्वज्ञेनोपमान युक्त नापि तत्त्वज्ञस्याज्ञेन, अत्यन्तमननु-रूपत्वात्, पर स मिथ्याज्ञानात् एवमपि करोति। अधुना अमार्गे मार्गबुद्ध्यादिरूप मिथ्यात्व दर्शयति-' उन्मार्गीयति ' उन्मार्गमिव-उत्पथमिवाचरति। 'जैनमार्ग' शुद्ध भगवत्पथ, यथा-नाय भगवत्प्रणीतो मार्ग किन्तूत्पथ इति। ' अपथ ' कुमार्ग प्राक्प्रति पादितमौद्देशिकभोजनादिक स्वकल्पित 'सम्यक् पथियति' सम्यक् पथमिव-सन्मार्गमिव-सन्मार्गमिवाचरति। अत्रापि यत्-जिनमार्गस्य चन्द्रवत्प्रकाशस्योन्मार्गेण-[ तामसेन ] नाम जैनेन सादृश्यापादनमुन्मार्गस्य च सत्पथतुल्यतापादन तन्मिथ्यात्वोदयादिति। तथा ' स्व ' आत्मान 'अगुणाग्रण्य' निर्गुणधुरन्धर ' कृतार्थीयति ' कृतार्थमिव-विहित सकलप्रयोजनमिवाचरति। अत्रापि स्वस्य निर्गुणमुख्यस्य ' कृतार्थेन ' गुणिमुख्येनो पमानमविचारत्वादिति। एव तावल्लोकोत्तरिकजनविषय मिथ्यात्वस्वरूप प्रदर्श्य बाह्य लोकविषयमपि प्रसङ्गात् किञ्चित्-दर्शयत-' मिथ्यात्वग्रहिलो जन ' आभिग्रहिकादि

